# देवयानी

## [संस्कृतनाटिका]






रचयिता तथा प्रकाशक :—

**डॉ० राम किशोर मिश्रः**

साहित्य-व्याकरणाचार्यः, एम० ए०, पी-एच० डी०

संस्कृत-विभागाध्यक्षः

महामना मालवीय महाविद्यालयः

खेकड़ा-२०११०१ (मेरठ) उत्तरप्रदेशः, भारतम् ।



मूल्यम् — २०/—

प्रकाशनतिथिः

पौषकृष्णद्वादशी, विक्रमसंवत्-२०४८.

१-१-१९९२

मुद्रकः — यमुनामुद्रणालयः, बागपत (मेरठ) उत्तरप्रदेशः ।

# समर्पणम्

ओ३ङ्कारमिश्रसम्भूतो होतीलालः पिता मम ।
देवी प्रातः स्मरणीया मातृत्वेन कलावती ॥
ययोरंशेन मे देहे रक्तं वहत्यहर्निशम् ।
ताभ्यां दिवङ्गताभ्यां देवयानी समर्पिता ॥



भारत उत्तरप्रदेश एटांजनपद—सोरोंवासी,
गगनतोयनिधिखातमहायने खेकरनगरवासवान् ।
होतीलालकलावतीसुतो रामकिशोरमिश्र इह,
त्रिभिरङ्कैर्नाटिकामिमामथ देवयानीं रचितवान् ॥

# शब्दद्वयम्

मत्स्यपुराणे त्रयस्त्रिंशेऽध्याये महाभारते चाऽऽदिपर्वणि ययातिवर्णने कचदेवयानीप्रसङ्गः प्राप्यते । देवयानी सुलभकोपस्य शुक्राचार्यस्य दुहिता सुलभकोपाऽभिमानिनी चाऽस्ति । कचेन शप्तयाऽनया ब्राह्मणतनययाऽपि ययातिः क्षत्रियः पतिरूपेण वृतः । रुष्टयाऽनया स्वसखी शर्मिष्ठाऽपि नाऽक्षम्यत । सा राजकुमारी वृषपर्वणः सुताऽप्यनया स्वपरिणयानन्तरं स्वचरणसेविकारूपेण दण्डिता । कोऽयंस्वस्या वशाऽनुगतः । कुपितयाऽनया स्वपतिर्ययातिरपि नाऽक्षम्यत ।

शर्मिष्ठाया एकोऽपि सुतस्तस्यै नाऽरोचत । तस्याः सहमतिमविगणय्य तत्सेविकायां ययातिरात्मजमजनयत् । अतो देवयानी रुष्टा स्वपितुराश्रमं जगाम । पश्चात्तद्दोषफलं स भुक्तवान् । नारीद्वयमध्ये नरस्य या दुर्दशा भवति, तामत्र नाटिका प्रकाशयति । नाटिकेयं रुचिकरा न वेति पाठका एव निर्णेष्यन्ति ।

इतः पूर्वं ममाऽनेके ग्रन्थाः प्रकाशिताः, किन्तु कस्यापि विषयेऽहं कस्यचन संस्कृतविदुषः प्राक्कथनं न प्राकाशयम्; परमत्र संस्कृतमहाकवेरन्ताराष्ट्रीयख्यातिप्राप्तस्य संस्कृतभाषाया महापण्डितस्य डॉ० श्रीसत्यव्रतशास्त्रिणो देवयानीप्राक्कथनं प्रकाशयामि ।

देवयानीप्राक्कथनं लेखयितुं यन्मया पत्रं प्रहितं तस्य पत्रस्य स्वीकृतिः शास्त्रिणा प्रेषिता—



३/५४, रूपनगरम्, दिल्ली–११०००७.
दिनाङ्कः— ३०/६/१९९१

मान्या महाकवयः !

जयतु भारती ।

आसाद्य भवतां पत्रं प्रसीदामितमामहम् ।
काव्यामृतरसास्वादमास्वाद्य रसिको यथा । १ ।
रामकीर्तिमहाकाव्यपरिशीलनतत्पराः ।
भवन्त इति विज्ञाय हर्षो माति न मे हृदि । २ ।

सहृदयहृदयं चेत्काव्यमेतन्मदीयं
हरति सफलता स्यादस्य सत्यं तदैव ।
हरति रुचिरगन्धा केतकी लोकचित्तं
न तु सुरुचिररूपः किंशुको गन्धहीनः । ३ ।

कालिदासाश्रया विज्ञाः ! कृतिः प्राकाश्यमेष्यति ।
जुलैमासेऽवश्यमेव तां प्रहेतास्मि नो चिरात् । ४ ।
देवयानीप्राक्कथनं रचयिष्याम्यहं ध्रुवम् ।
प्रहेयस्तन्मुद्रितांशोऽमुद्रितांशश्च मे द्रुतम् । ५ ।

शिवमत्रेत्युदीर्याऽहं प्रार्थ्ये चापि भवच्छुभम् ।
सद्यः पत्रोत्तराकांक्षी स्वां वाचमुपसंहरे । ६ ।

भवद्गुणगणावर्जितहृदयः—
सत्यव्रतः शास्त्री

देवयानी नाटिकेयं यदि सहृदयहृदयं हरति, तदहं स्वरचनं सफलं मंस्ये । अतः पाठका एव प्रमाणम् ।

राम किशोर मिश्रः

# प्राक्कथनम्

देवयानीति नाटिकायाः परिचयमत्र प्रस्तुवतो मे महान् प्रहर्षः। एतस्या रचयितारः प्रथितयशसो महाकवयो डा० रामकिशोर मिश्रा यैर्नाना-ग्रन्थप्रणयनेनोपार्जितो जगतीतलेऽनन्यसाधारणो यशोभरः। कविवराणामेतेषां प्रसन्ना मधुराश्च वाग्गुम्फा आवर्जयन्ति सहृदयहृदयानि प्रमोदभरनिर्भराणि च तानि विदधति। सर्वप्रथममेतेषां विद्योत्तमाकालिदासीयं नाम महाकाव्यं मयाऽऽमूलचूलमालोचित निपीतश्चाकण्ठ तद्रसः। विस्तरेण तत्समीक्षित मया स्वकीये सद्यः प्रकाशित आंग्लभाषोपनिबद्धे 'कालिदास इन मॉडर्न संस्कृत लिटरेचर' इति नाम्नि ग्रन्थे। तदनु नैकेऽपरे तद्ग्रन्था अपि परिशीलिताः। यथा यथैतद्ग्रन्थपरम्पराध्ययनेऽहं प्रवृत्तस्तथा तथतत्काव्यप्रतिभयाऽस्मि चमत्कृतः। विरला एव सन्त्यद्यत्व एतादृशा रससिद्धाः कवय इति निश्चित्य ब्रवीमि।

मत्स्यपुराणे अयस्मिन्नशेऽध्याये महाभारत आदिपर्वणि चोपलभ्य-मानस्य ययातिवर्णनप्रसङ्गेनोपस्थापितस्य कचदेवयानीप्रसङ्गस्य देवयानी-नाम्ना नाट्यरूपान्तरणं विहित कविवरेण्यैः। प्रसङ्ग एवायं तादृशो यत्र नाटयतत्त्वान्यन्तर्निहितानि। अत एव तत्र स्वाभाविकी प्रवृत्तिः संस्कृतविदुषां विशेषतस्त्वद्यतनानाम्। मणिमञ्जरीति नामके नाट्यसङ्ग्रहे देवयानीतिना-म्नी दृश्यत्रयात्मिका नाटिका विरचिताऽऽसीद् हैदराबादीयैर्डा० बोम्मिकण्टि रामलिङ्गशास्त्रिमहाभागैर्यत्र मूलकथानकं भूयसा यथा तथमुपस्थापयद्भि-रपि तैर्ययातिजरावर्णनेन शापपुरुषाविर्भावरूपं किञ्चित्स्वोपज्ञमपि प्रस्तुतम्। प्रस्तुतनाटिकायामपि नाट्यापेक्षानुसारेण स्वप्रातिभोंऽशः समायोजितो मिश्र-महाभागैः। प्रथमेऽङ्के द्वितीयदृश्ये दैत्यराजवृषपर्वणः सभायां गुप्तचरागमनं तेन च शुक्राचार्याश्रमे बृहस्पतिपुत्रस्य कचस्य सञ्जीवनीशिक्षार्थं सम्प्राप्तिः

रिति सूचनं सभासद्भिस्तत्प्रतिविधानार्थं शुक्राचार्यस्य विद्याशिक्षणनिषेधस्त-स्य तदनङ्गीकारे च गुरुपदपृथक्करणप्रस्तावः, वृषपर्वणस्तत्रासहमतिः, सभासदां कचहत्याप्रस्तावो वृषपर्वणश्च तदङ्गीकार इतिसर्वमेव डा० मिश्रप्रज्ञोपज्ञमेव । वृषपर्वणा द्वारपालाह्वानं द्वारपालस्य चाकम्पन इति कल्पितं नामापि तादृशमेव । राजसभायां सभासद्भिः स्वमतोपस्थापनं राज्ञा च तदङ्गीकाराविति सर्वं कथानकस्य नाट्यरूपेण प्रस्तुतौ सहायकम् ।

एवमेव नाटिकाया द्वितीयाङ्कद्वितीयदृश्ये ययातेर्देवयान्याश्च संवादः स्वोपज्ञ एव । अत्र ययाति र्देवयानीं पृच्छति कुतो न भवत्या ब्राह्मणो वृत इति । तत्प्रश्नोत्तररूपेण "देवयानि ! कचेन सह वृतेन स्वकीयेन प्रणयसम्बन्धेन तेन च प्रणयनिवेदनास्वीकरणेन कचसमक्षं च प्रदर्शितकामनया त्वं दूषिताऽसि, पुरुषस्य हृदये तां नारीं प्रति सम्मानो भवति या तस्मात्पूर्वं कस्यापि प्रेमिका न स्यादिति ययातिना तस्या अधिक्षेपः, देवयान्या च मम कौमार्यमक्षुण्णमेवेति तन्निरासः" इत्यादि सर्वं नूतनमेवोपन्यस्तं कविवरैः । किञ्च देवयान्या यदुरनुश्चतुर्वसुश्चेति त्रयः पुत्रा निर्दिष्टाः कविवर्यैः "देवयानीक्रोडं क्रमशो यदुरनुश्चतुर्वसुश्च तदात्मजा अलङ्कृतवन्तः ।" मत्स्यपुराणे महाभारते च पुनर्देवयान्या द्वावेव पुत्रावास्तामित्युल्लेखः । तथाहि—

ययाति र्देवयान्यां तु पुत्रावजनयन्नृपः ।
यदुं च तुर्वसुं चैव शक्रविष्णू इवापरौ ॥

अनुस्तत्र शर्मिष्ठायाः पुत्र उक्तः । तथा हि—

तस्मादेव तु राजर्षेः शर्मिष्ठा वार्षपर्वणी ।
द्रुह्युं चानुं च पूरुं च त्रीन्कुमारानजीजनत् ॥

शर्मिष्ठायास्त्रयः पुत्रा मम पुनर्द्वावेवेति देवयानी भृशमतुदत् । ययातेस्तस्याः पुत्रप्राप्तिरिति प्रथमः प्रहारः । ततोऽपि प्रबलः पुत्रत्रयप्राप्तिरिति । एवमेव मानसं क्षोभं स्वपित्रे शुक्राचार्याय सेत्थं प्रकटीकृतवती—

त्रयोऽस्यां जनिताः पुत्रा राज्ञाऽनेन ययातिना ।
दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते ।।

किञ्च, तुर्वसो नाम चतुर्वसुरूपेण परिवर्तितं कविवरैः । तदेतत्तेषां परम्परातः पृथगपि प्रवर्तितुमभिनिवेशं व्यनक्ति । नहि प्रतिभावन्तः पूर्वैः क्षुण्णमेव पन्थानमाश्रयन्ति । नूतना तेषां कृतिः पृथक्स्वरूपं पूर्वकृते विभूयादेव । कथानकमत्राधारः । अवलम्बनं नाम तत् । नहि तस्याक्षरानुपालनमावश्यकम् । यद्येवं स्यात्किं नाम तत्र स्वीयं स्यात् ? कालिदासेनापि शाकुन्तलकथानकं महाभारतादेव गृहीतम् । परन्तु बहु तत्र स्वकीयमपि समायोजितम् । तदेव कालिदासीयत्वं नाम । अन्यथा तूपजीव्यकथानकाश्रिताः सर्वा अपि उत्तरकालिक्यः कृतयोऽनुवादरूपा एव स्युः ।

नाटिकायामस्यां संवादा अतिरुचिराः । वस्तुसंनिवेशोऽपि मनोहरः । वाग्विन्यासोऽपि हृदयावर्जकः । स्थाने आधुनिकान्याभाणकानि निपुणं सुगिरोपन्यस्तानि । तथाहि —

(१) येन सर्पवधः स्यात् किन्तु लगुडभङ्गोऽपि न भवेत् ।
हिन्दीरूपम् — सांप भी मर जाय और लाठी भी न टूटे ।

(२) वंशनाशेन सह वंशीनाशोऽपि भवति ।
हिन्दीरूपम्— न रहेगा बांस न बजेगी बांसुरी ।

(३) पाणिग्रहणेन त्वं मे गलग्राहं कथं कुरुषे ?
हिन्दीरूपम्— मेरे गले क्यों पड़ रही हो ?

नाटिकामाकर्षिकां विधातुमुपजीव्यकथानकीयाः सङ्केताः संवादरूपेण यत्र तत्र पल्लविता येषु कचदेवयान्योर्ययातिशर्मिष्ठयोर्ययातिशुक्राचार्ययोश्च संवादा विशेषोल्लेखमर्हन्ति ।

देवयानीतिनाटिका कविवरेण्यानामतीवोत्कृष्टा कृतिश्चिरं लोके समादरभाजनं भविष्यति यशोऽतिशुभ्रं चैतेषां दिक्षु विदिक्षु च भूयोऽपि प्रसारयिष्यतीति प्रतियन्

विरमति

विदां विधेयः

सत्यव्रतः शास्त्री

दिल्ली — दिल्लीविश्वविद्यालयसंस्कृतविभागाचार्यः

१६-७-१९९१ — पुरीस्थश्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य

प्राक्तनकुलपतिश्च ।

नाटिका—

# देवयानी

चञ्चालयति लोकेऽस्मिन्नरनारीमनांसि यः ।
तस्मै सृष्टिजनकाय मन्मथाय नमोऽस्तु मे ॥

[नान्द्यन्ते]

सूत्रधारः — भद्र ! विद्वत्सभासमक्षमद्य बहुनाटकरचयित्रा विद्यावाचस्पतिना श्रीमदाचार्यरामकिशोरमिश्रेण प्रणीता देवयानी नाम नाटिकाऽभिनीयते, तत्त्वया सम्यक्कृता प्रतिपात्रसज्जा ?

सहायकः — आमेवं महाभाग ! पात्राणि तत्सर्वं विधातुं भवदादेशमपेक्षन्ते ।

सूत्रधारः — तत्प्रारभ्यतां भद्र ! विलम्ब नाचर ।

सहायकः — (अङ्गुल्या निर्दिश्य) पश्य, पश्य, श्रीमन् ! तत्र मञ्चमागते द्वे पात्रे ।

[सर्वे पश्यन्ति । पट उत्सरति जनद्वयं प्रविशति ।]

## प्रथमदृश्यम्

[स्थानम्— दैत्यगुरोः शुक्राचार्यस्याऽऽश्रमः ।]

कचः — (शुक्राचार्यमवलोक्य) आचार्य ! बृहस्पतेः पुत्रः कचोऽहं भवन्तमभिवादये ।

शुक्राचार्यः — वत्स ! कथय, किमर्थमागतोऽसि ।

कचः — भगवन् ! दैत्यहननाद्देवलोके देवसंख्या न्यूनाभवत् । अतो देवैरहं

सञ्जीवनविद्याशिक्षणार्थं भवतः पार्श्वं प्रेषितोऽस्मि :

शुक्राचार्यः — वत्स ! तव पिता बृहस्पतिरपि सञ्जीवनविद्यां जानाति, तस्मात्त्वया सा कथन्न गृहीता ?

कचः — महाराज ! कुसुमयप्रभावात्स तां विस्मृतवान् । अस्मादेव कारणाद्दैत्यहता देवा नैव सञ्जीविताः क्रियन्ते । अत एव मां मम पिता भवत्सेवायां प्रेषितवान् । कृपया मम शिष्यत्वमङ्गीक्रियताम् ।

शुक्राचार्यः — वत्स ? तव शिष्यत्वमङ्गीकरोमि । त्वमधुना देवहननचिन्तां दूरीकुरु । मम सहपाठिनो बृहस्पतेः पुत्रोऽसि । अतस्त्वं मे पुत्रवदसि । अत्र ममाश्रमे ब्रह्मचर्येण वस । समये सञ्जीवनविद्यामवाप्स्यसि ।

देवयानी— (प्रविश्य) पितः ! कोऽयम् ?

शुक्राचार्यः — पुत्रि ! मम गुरोर्महर्षेरङ्गिरसः पौत्रो मम सहपाठिनो बृहस्पतेः पुत्रः कचोऽयं सञ्जीवनीं विद्यां ग्रहीतुमत्रागतोऽस्ति । अद्यप्रभृत्यस्य भोजनादिसर्वव्यवस्थापिका त्वमेवाऽसि दुहितः !

देवयानी— कथन्न पितः ! [कचसौन्दर्यमवलोक्य] देवलोकादागतस्याऽस्य देवस्य सर्वविधव्यवस्थाभारमहं स्वीकरोमि । पितस्त्वं निश्चिन्तो भूत्वा विज्ञानसाधनामधितिष्ठेः ।

शुक्राचार्यः — [कचमुद्दिश्य] वत्स ! इयं देवयानी मम सुता वर्तते । त्वमनया सह ब्रह्मचर्यमाश्रमे पालय । गच्छ देवयान्या सह । [देवयानीमुद्दिश्य] वत्से ! कचं स्वाश्रमं दर्शय । महानसं नीत्वा दुग्धमिमं पायय । गच्छ, साधंमेन गृहीत्वा ।

देवयानी— एहि कच ! एहि, पितुर्मे स्वगुरोश्च वचनं पालय । [कचो देवयान्या सह गच्छति ।]

पटीक्षेपः ।

## द्वितीयदृश्यम्

[स्थानम्— दैत्यराजवृषपर्वणः सभास्थलम् ।]

गुप्तचरः — [वृषपर्वणमुद्दिश्य] महाराज ! शुक्राचार्याश्रमे देवगुरोर्बृहस्पतेः पुत्रः कचो नाम सञ्जीवनीशिक्षणाय समागतोऽस्ति । यदि स तां विद्यां गृहीत्वा देवलोकं याति, तद्दैत्यहता देवाः पुनर्जीविता भविष्यन्ति ।

वृषपर्वा— किमाचार्यस्तं सञ्जीवनरहस्यं शिक्षयति ?

गुप्तचरः — अथ किम् ? तेन तस्य शिष्यत्वमङ्गीकृतम् ।

सभासदो दैत्याः — दैत्यराज ! भवानाचार्यमाहूय तं कथयेत्, यत्स तं सञ्जीवनं न शिक्षयेदिति ।

वृषपर्वा— यदि स तं शिक्षयेदेव तत्पुनः किं कर्तव्यम् ?

दैत्याः — तदाचार्यो राजगुरुपदाच्च्युतो विधेयः ।

वृषपर्वा— राजगुरुपदाच्युतो भूत्वा स देवहतान्दैत्यान्नैव पुनर्जीवयिष्यति । अनया स्थित्या तु राक्षसा न्यूना भविष्यन्ति, ततश्चाऽस्माकं सर्वनाशो निश्चित एव । कथ्यतामग्रे क उपायः ?

सभासदः — तत्कचहत्या कर्तव्या, येन सर्पवधः स्यात्, किन्तु लगुडभङ्गोऽपि न भवेत् ।

वृषपर्वा— एतदेवमुचितम्, वंशनाशेन सह वंशीनाशोऽपि भवति । अतः पूर्वमाचार्यमाहूय तच्छिक्षणाय निषेधः कारयितव्यः । यदि स निषेधं न मन्येत, तदा कचहत्या सुनिश्चितैव ।

सभासदः — उचित एवाऽयं विचारः ।

वृषपर्वा— कः कोऽत्र भोः !

द्वारपालः — (प्रविश्य) अहमकम्पन उपस्थितोऽस्मि । किमादिशति महाराजः ?

वृषपर्वा— अकम्पन ! गच्छ, शुक्राचार्यं सार्धमानय ।

[द्वारपालो याति । शुक्राचार्येण सह ततः स प्रविशति ।]

वृषपर्वा— आगम्यताम्, आगम्यतां गुरुदेव ! समलङ्क्रियतामासनमेतत्, आस्यताम्, आस्यताम् । [सर्वे सभासद उत्तिष्ठन्ति, शुक्राचार्यस्य स्वागतं व्याहरन्ति ।]

शुक्राचार्यः — कथ्यतां राजन् ! मम योग्या का सेवा ? यदर्थमहमाहूतोऽस्मि ।

वृषपर्वा— क्षम्यतां गुरुदेव! श्रूयते मया यद्देवलोकात्कश्चन कचनामा छात्रः सञ्जीवनशिक्षणाय समागतोऽस्ति ।

शुक्राचार्यः — सत्यमेव श्रुतं त्वया राजन् !

वृषपर्वा— सर्वेषां सभासदां मतमेतत्, यद्भवता सञ्जीवनविद्या न शिक्षणीयेति ।

शुक्राचार्यः — कथमेतत् ? सञ्जीवनशिक्षणनिषेधः केन क्रियते ?

वृषपर्वा— मया दैत्यराजेन वृषपर्वणा गुरुदेव !

शुक्राचार्यः — दैत्यराज ! किं विस्मृतोऽसि ? त्वं कं किं कथयसि ? अहं तव गुरुरस्मि । गुरुमानस्तु शिष्येण कर्तव्य एव ।

वृषपर्वा— भगवन् ! मया तु तत्सर्वं ससम्मानमेव निवेद्यते ।

शुक्राचार्यः — मयाऽपि दैत्यराज ! कचशिक्षणेन स्वगुरुमान एव क्रियते । या यस्य कुलस्य विद्या, तां तत्कुलजाताय प्रदातुं का कस्य हानिः ?

वृषपर्वा— मम दैत्यकुलस्य च हानिर्भविष्यति गुरुदेव ! यदानीमियं तव सञ्जीवनविद्या देवलोकं यास्यति, तदानीं दैत्यहता देवाः पुनर्जीविता भविष्यन्ति । अत एव मया दैत्यहिताय निवेद्यते यद् भवता कचो नैव शिक्षणीय इति ।

शुक्राचार्यः — एतन्नैव सम्भवति राजन् ? या सञ्जीवनविद्या मया कचाय दातुं निश्चिता, सा मम क्व, तस्यैवाऽस्ति । कचस्तु मम गुरुदेवस्याऽङ्गिरसः पौत्रोऽस्ति, तस्मै तां दत्वाऽहं स्वगुरोः ऋणान्मुक्तो भविष्यामि । अतस्तां तमहमवश्यमेव शिक्षयिष्यामि । यदि

भवतां सर्वेषां दैत्यानां मम कचविद्याप्रदाने विमतमस्ति, तदहमद्यैव युष्माकं राज्यं त्यक्त्वा क्वाप्यन्यत्र गच्छामि। कथयत, किं मतमस्ति सर्वेषाम् ?

सर्वे दैत्याः — नैव गुरुदेव ! नैव। भवताऽस्माकं राज्यं विहाय क्वाप्यन्यत्र न गन्तव्यम्, परमेतदस्माकं प्रार्थनं मन्तव्यम्, येन देवलोकादागतः कचः सञ्जीवनविज्ञो न स्यादिति।

[सभा विसर्जिता भवति। सर्वे उत्तिष्ठन्ति। पटीक्षेपो भवति।]

## तृतीयदृश्यम्

[स्थानम्— शुक्राचार्यस्याऽऽश्रमः। आचार्य आसने समुपविष्टोऽस्ति।]

देवयानी— (प्रविश्य) पितः ! सायमभवत्, परमिदानीमपि कचस्तु वनादागतो न। किं करवाणि तात ! मम मनस्तु तं विना न रमते।

शुक्राचार्यः — पुत्रि ! धैर्यं धारय, कैश्चन क्षणैः स आयाति।

देवयानी— पितः ! गावस्तु समागताः, परमद्य स नैवागतः। मम मनस्तु शङ्कते यत्सोऽद्य दैत्यैर्हतः। भवता स्वध्यानविद्यया स निरीक्षणीयः।

शुक्राचार्यः — अस्तु, पुत्रि ! समाश्वसिहि, ध्यानं कृत्वाऽहं तं पश्यामि। [ध्यानस्थो भूत्वा] वत्से ! त्वं सत्यमेव वदसि, स तु दैत्यैर्वने हतः। तस्य शिक्षणमवलम्ब्य दैत्यानां प्रबलविरोध आसीत्। तस्याऽयमेव परिणामः।

देवयानी — पितः ! भवता स्वसञ्जीवनविद्यया कचः पुनर्जीवयितव्यः। यावन्न भवांस्तं जीवयति, तावन्न किञ्चिद् भक्षयामि, न किञ्चित्पिबामि। अत्रैव धरायामुपविश्य भवत्समक्षमनशनमारभे।

शुक्राचार्यः — अनशनं न कुरु पुत्रि ! अहमधुनैव कचं जीवयामि। वनं गत्वा तस्याऽस्थीनि गृहीत्वा प्रयोगशालायां तानि सन्धाय तत्र प्राणसञ्चारं करिष्ये। किञ्चित्कालानन्तरमेव त्वं कचं पुनर्जीवितमेव

द्रक्ष्यसि ।

[शुक्राचार्यो वनं याति, तदस्थीनि गृहीत्वा प्रयोगशालां प्रविश्य सञ्जीवनविद्यया तं कचं पुनर्जीवयति ।]

कचः — गुरुदेव ! भवताऽहं पुनर्जीवितः । भवांस्तु मम जीवन - प्रदानेन पिता । दैत्यैरहं निहत आसम् ।

शुक्राचार्यः — सर्वमहं जानामि वत्स ! गच्छ, देवयानी त्वां प्रतीक्षते । सा तु त्वां विना न किञ्चिदश्नुते, न किञ्चित्पिपासति । [तारस्वरेण] अयि देवयानि ! पश्य, पश्य पुत्रि ! कचस्त्वां प्रतीक्षते । (निष्क्रान्तः ।)

देवयानी— आयामि पितः ! [कचं पुनर्जीवितं दृष्ट्वा प्रसीदति ।] कच ! गोभिः सह कथन्नागत आसीत् ?

कचः — कथमहमिदानीं तव समीपमागमिष्यं देवयानि ! यदि मां मम गुरुर्न पुनरजीवयिष्यत् । इतः पूर्वन्तु वने दैत्यैरहं घातित आसम् । अधुना तु पुनर्जीवनप्रदानेन तव पितापि मम पिताऽभूद् देवयानि !

देवयानी— अस्तु, कच ! दैत्यैस्त्वं क्व मारितः ?

कचः — तत्र देवयानि ! यत्राऽहं गाश्चारयन्नासम् ।

देवयानी— मारका दैत्याः कियन्त आसन् ?

कचः — पञ्चषा आसन् ।

देवयानी— अस्तु, एहि कच ! दुग्धपानं कुरु, ज्ञायसे त्वं क्षुधाकुलोऽसि ।

[तौ निष्क्रान्तौ । पटाक्षेपः ।]

## चतुर्थदृश्यम्

स्थानम्— दैत्यराजवृषपर्वणः सभास्थलम् ।

[ततः प्रविशति दैत्यराजो वृषपर्वा दैत्यैः सह ।]

दैत्याः — महाराज ! कचस्तु पुनर्जीवितः शुक्राचार्येण ।

वृषपर्वा — किं द्वितीयवारमपि जीवितः सः। प्रथमन्तु तस्याऽस्थीनि सुलभान्यासन्, परमधुना तु संहारकैस्तदस्थीनि समुद्रे निपातितानि, पुनः कथं स जीवितस्तेन ?

दैत्येष्वेकः — वधस्थलात्तस्य रक्तरञ्जितमृत्तिकामादाय स पुनर्जीवितः शुक्राचार्येण महाराज ! अधुना तु स कचः प्राप्तसञ्जीवनविद्यो भविष्यति।

द्वितीयः — कथं भविष्यति स सञ्जीवनविज्ञः ? अधुना तृतीयवारं तं हत्वा प्रज्वाल्य च तस्य भस्म सुरायां मिश्रयित्वा शुक्राचार्यं पाययिष्यामि। पुनस्तं स कथं जीवयिष्यति राजन् ?

तृतीयः — यदि स तं जीवयिष्यति तत्स शुक्राचार्योदरं विदार्य बहिरागमिष्यति, येनाचार्यस्तु जठरविदारणेन मृतो भविष्यति। पुनस्तं कः सञ्जीवनविद्यां शिक्षयिष्यति ?

दैत्याः —(प्रसन्नाः सन्तः) एतदेव वरम्, एतदेव वरं महाराज !

वृषपर्वा— अनेन विधिना कचहननेन सह तु शुक्राचार्यस्यापि वधो भविष्यति। पुनः सञ्जीवनविद्यया विना दैत्यान् को जीवयिष्यति ? ईदृशं हत्याकर्म नोचितम्, यतो हि शुक्राचार्यहत्यया सह सञ्जीवनी विद्यापि नष्टा भविष्यति। तन्नैव कर्तव्यमेतद् युष्माभिः।

दैत्याः — अधुना तु महाराज ! एतद्वधकर्मैव वरमस्ति। सञ्जीवनविद्यां विना ये निर्बला भविष्यन्ति, ते सबलैः हंनिष्यन्ते। बलवतां राज्यं भविष्यति। अस्माकं शक्तिसमक्षं तु देवा दुर्बला एव, वयं सर्वथा सबलाः स्मो महाराज।

वृषपर्वा – अस्तु, यदुचितमेवाऽस्ति तत् क्रियताम्। प्रकृतिस्तु स्वसन्तुलनमेव रक्षति। येषां जीवनमत्र भविष्यति, ते स्थास्यन्ति, शेषा मृत्युमवाप्स्यन्ति। गच्छत, बह्वी रात्रि गंता, शयनं कुरुत।

[सर्वे निष्क्रान्ताः। पटीक्षेपः।]

## पञ्चमदृश्यम्

[स्थानम्— शुक्राचार्यस्याऽऽश्रयः ।]

[ततः प्रविशति चतुष्पादिकासनस्थः शुक्राचार्यः ।]

देवयानी— (प्रविश्य) पितः ! कचस्त्वद्यापि नायातः, सायमभूत् ।

शुक्राचार्यः — गोचारणाय निषेधितोऽपि स क्व गत आसीत् ? यः सायं कालेऽपि न प्रत्यागतः पुत्रि ! किं त्वया स क्वापि प्रेषितः ?

देवयानी— मया स मध्याह्ने भगवतश्चन्द्रमौले लिङ्गे कमलानि समर्पयितुं सरोवरात्तानि समानेतुं प्रेषितआसीत्, ज्ञायते स पुनस्तृतीयवारमपि मारितो दुष्टदैत्यैः । पितः ! ध्यानस्थो भूत्वा तदन्वेषणं कुरु यत्तस्य किं भूतम् ? तमन्तरेण तु तपोवनमिदं शून्यमेव ।

शुक्राचार्यः — पुत्रि ! अद्य तु सुरावशीभूतोऽहं कथं ध्यानरक्षां करिष्ये ? धैर्यं धारय, स आगच्छन्निव प्रतीयते ।

देवयानी— कुत आगच्छन्निव प्रतीयते सः ? कथय, पितरद्य क्व सुरापानं कृतं त्वया ?

शुक्राचार्यः — तत्रैव पुत्रि ! वृषपर्वणः सभायामधुनैव सायम् । यदानीमहं समाहूतस्तेन दैत्यराजेन वृषपर्वणा, तदानीं तत्र सुरासभा समायोजिताऽऽसीत् । अहमेभिर्दुष्टदैत्यैर्गुरुमानेन सह देवकुलजातोऽपि सुरापायी दैत्यः कृतोऽस्मि । किं कुर्यामहं पुत्रि ! सङ्गतिप्रभावोऽयम् ।

देवयानी— यदहं सम्प्रति वच्मि, तदेव कुरु पितः ! अन्यथा कचहत्यापापभाग् भविष्यति भवान्, यस्त्वं दैत्यगुरुरपि दैत्यहननात्त रक्षितुमसमर्थोऽभूः । अतो ध्यानेन जानीहि यत्स कस्यां स्थित्यामस्ति ? पितः ! किं सुप्तोऽसि ?

शुक्राचार्यः — नैव सुप्तोऽस्मि पुत्रि ! सम्प्रति तन्द्रा मां बाधते ।

देवयानी— पितः ! स्वयोगविद्यया तन्द्रां दूरीकृत्य ध्यानस्थो भव । कचह-

त्याविधिं च ज्ञात्वा तं सञ्जीवय पुनरेकवारम् । किं नैव शृणोषि ? तदहमपि तच्चिन्तया म्रिये ।

शुक्राचार्यः — नैव पुत्रि ! नैव, त्वं न म्रियस्व । अहमिदानीमेव ध्यायामि । [ध्यानस्थो भवति । किञ्चित्क्षणानन्तरं वदति ।] पुत्रि देवयानि ! ज्ञाता मया तस्य स्थितिः ।

देवयानी— सम्प्रति क्वाऽस्ति स पितः !

शुक्राचार्यः — स ममोदरे विद्यते पुत्रि !

देवयानी— तवोदरे सः ? कथमेतत् पितः ?

शुक्राचार्यः — तत्सर्वं शृणु देवयानि ! यदा त्वया स सरोवरे प्रेपितस्तदैव स तत्र कैश्चिद्दैत्यैर्हतः प्रज्वालितश्च । तस्य भस्म सुरायां मिश्रयित्वा दैत्या मामाहूय सुरासभायां तां भस्मसुरामपाययन् । इत्थं स भस्मसुरारूपो ममोदरे विद्यते पुत्रि !

देवयानी— तत्पितः ! तं स्वोदरे सञ्जीवय स्वविद्यया पुनः । यदि तं नैव सञ्जीवयसि तदहमत्रैव तच्चिन्तया म्रिये ।

शुक्राचार्यः — नैव वत्से ! नैव, त्वं न म्रियस्व । अहं तं स्वजठरेऽपि जीवयामि । [सञ्जीवनीप्रभावेन तं स्वोदरेऽपि जीवयति ।] पुत्रि ! पुनर्जीवितः स कचो ममोदरे । त्वमधुनाऽनेन सार्धमालपितुमर्हसि देवयानि ! [सुराप्रभावेन कचस्तन्द्रितो भवति ।]

देवयानी— कच ! त्वं क्वाऽसि ?

कचः — साम्प्रतमहं स्वगुरोस्तव च पितुरुदरे तिष्ठामि देवयानि !

देवयानी— बहिरागच्छ कच ! तत्रैव कथमवस्थितोऽसि ?

कचः— सम्प्रति यद्यहं तव पितुरुदराद् बहिरायामि, तत्तव पितुरुदरं विदीर्णं भविष्यति, येन तव पितापि मरिष्यति । तस्मिन्मृते सति सा सञ्जीवनी विद्यापि नष्टा भविष्यति, यामधिगन्तुमहं वारं वारं मृत्वाऽपि प्रयते । अतस्तादृशं कर्म विधेयम्, येन तव पितुरपि

ममापि च जीवनरक्षा भवेत् ।

देवयानी— तदहं किं करवाणि ? कच ! कथयस्व किञ्चिद्विचार्य ।

कचः — देवयानि ! एक एव मार्गो द्वयोर्जीवितयोः । तं त्वमेव स्वपित्रा कारयितुं क्षमाऽसि ।

देवयानी— कथय, कच ! तं मार्गं ज्ञापय, येनाऽहं त्वां स्वजनकं चापि रक्षयितुं शक्नुयाम् ।

कचः — देवि ! स्वपितरं कथयस्व, यत्स मामुदरस्थितमेव स्वसञ्जीवनविधिं शिक्षयतु, येनाऽहं तव पितुरुदराद्बहिर्गत्य तन्मृतशरीरं तया सञ्जीवनविद्यया पुनर्जीवयितुं शक्नुयाम् ।

देवयानी— वरं कच ! वरम् । अहं पितरं कथयित्वा तुभ्यं सञ्जीवनविद्यां प्रदापयिष्यामि । [स्वपितरमुद्दिश्य] पितः ! शृणोषि, कचस्तु तवोदरान्निस्सर्तुमिच्छति । तस्य बहिर्निस्सरणात्तव जठरं विदीर्णं भविता । विदीर्णोदरस्त्वं स्वप्राणांस्त्यक्ष्यसि । पुनस्त्वयि मृते कमहं पितरं कथयिष्ये ?

शुक्राचार्यः — तदहं तमुदरे हन्मि पुत्रि !

देवयानी— नहि, नहि, पितः ! तमुदरे नैव जहि, परन्तु सञ्जीवनविद्यया तं शिक्षितं कुरु, येन स तवोदराद्बहिरागम्य विदीर्णजठरत्वान्मृतं त्वां तया विद्यया पुनर्जीवितं करिष्यति । अनेन तव सञ्जीवनविधिना द्वयो र्जीविते सुरक्षिते भविष्यतः ।

शुक्राचार्यः — अस्तु पुत्रि ! तव कथितमेव करिष्ये ।

देवयानी— कदा करिष्यसि ? यदा स तव जठरं विदारयिष्यति पितः ! अतः सम्प्रत्येव तं सञ्जीवनविधिं शिक्षय, शीघ्रं कुरु, शीघ्रं कुरु पितः ! शुभस्य शीघ्रमिति नीतिवचनमपि पालय ।

शुक्राचार्यः — शिक्षयामि सञ्जीवनविधिं कचं देवजानि ! [कचमुद्दिश्य] वत्स कच ! अद्य स समयोऽपि समागतः, यच्छिक्षणाय त्वमत्रा-

गतोऽसि। अहं त्वमुदरस्थितमेव सञ्जीवननिधिं शिक्षयामि; सावधानो भूत्वा तद्विधिं शृणु। [निधिं कथयति, येन कचः सञ्जीवन्या शिक्षितो भवति।]

कचः — गुरुदेव! तव कृपया साक्षात्कृतसञ्जीवनविद्योऽस्मि। सम्प्रति मामाज्ञापय, किमधुना करवाणि?

शुक्राचार्यः — वत्स! त्वमधुना सञ्जीवनविद्यां प्रयोक्तुमलमसि। यदा ममोदराद् बहिरागमिष्यसि, तदा मां मृतमेव द्रक्ष्यसि। अतस्त्वयाऽहं सञ्जीवनविद्यां प्रयुज्य पुनरुज्जीवयितव्योऽस्मि। वत्स! यथोक्तं तथा त्वमाचर। कच! ममोदरं विदार्य बहिरागच्छ।

[कचः शुक्राचार्यजठरं विदार्य बहिरायाति।]

कचः — (शुक्राचार्यं मृतमवलोक्य सञ्जीवनप्रयोगं कृत्वा) अयि गुरुदेव! भृगुपुत्र शुक्राचार्य भगवन्! उत्थीयताम्, उत्थीयताम्।

(शुक्राचार्यं पुनर्जीवितमवलोक्य प्रसीदन्)

अङ्गिरसः पौत्रो बृहस्पतेः पुत्रः कचोऽहं गुरुदेवं भार्गवं सादरं प्रणमामि। अद्य प्राप्तसञ्जीवनविद्यो भवज्जठरोत्पन्नोऽहं पुत्र एवाऽस्मि। सम्प्रति देवलोकं गन्तुमाज्ञां प्राप्तुमिच्छामि।

शुक्राचार्यः — वत्स! गच्छ, देवलोकम्, सञ्जीवनविद्यया दैत्यदानवहतान्देवान् सञ्जीवय। मम पुत्रीं देवयानीं मिलित्वा गच्छेः। एषा त्वां प्रतीक्षते। [निष्क्रान्तः।]

देवयानी — कच! अद्याऽहं बहुप्रसन्नाऽस्मि त्वां प्राप्तविद्यमवलोक्य! आगच्छ मया सह, त्वामहं पुष्पहारं समर्प्य सम्मानयिष्यामि।

कचः — देवयानि! त्वया मदर्थं बहूनि दुःखानि सोढानि गुरुपुत्रि!

देवयानी — आगच्छ कच! मम कुटीरम्, त्वामहं दुग्धं पाययिष्यामि।

[तौ निर्गच्छतः। पटीक्षेपो भवति।]

— • —

## षष्ठदृश्यम्

देवयानी— "प्रिय कच ! तुभ्यमहमद्य वर्धापनमर्पये यत्त्वया सञ्जीवनविद्याऽधिगता ।" अतस्ते पुष्पहारमपि समर्पयामि ।

कचः — "देवयानि ! मदीयमद्य परमहर्षस्य दिनम्, यद्देवलोकाय मया सा विद्या शिक्षिता, यस्या देवजीवनसंरक्षणाय वह्वावश्यकतासीत् ।"

देवयानी— "किं भवानद्यैव देवलोकं प्रतिष्ठते ?"

कचः — "आमेवं देवयानि ! तत्र गत्वाऽहं त्वां सदा स्मरिष्यामि ।"

देवयानी— "मां भवान् स्मरिष्यति ?"

कचः — "त्वया मम संजीवनविद्याशिक्षणे बह्वी सहायता कृता, किं तामहं विस्मर्तुं शक्नोमि ?"

देवयानी— "यदि भवान्मां विस्मर्तुं नार्हति, तन्मां गृहीत्वैव भवता तत्र गन्तव्यम् ।"

कचः — "त्वां सार्धं गृहीत्वा कथमहं गन्तुमर्हामि ? गुरुदेवपादाः कस्मै योग्याय वराय तव वैवाहिकदानमपि करिष्यन्ति ।

देवयानी— "तद्दानपात्रं भवानपि भवितुमर्हति ।"

कचः — "गुरुकन्याग्रहीताऽहं कथं भवितुं शक्नोमि ?"

देवयानी — "तत्र का भवत आपत्तिः ?"

कचः — "अहं तेषां, तवपितृचरणानां शिष्योऽस्मि । शिष्यस्तु पुत्रतुल्यो भवति । अतो गुरुपुत्रीत्वेन त्वमसि मे भगिनी ।"

देवयानी— "नाऽहं तव भगिनी कच ! त्वं मे प्रियोऽसि, मम पाणिग्रहणं कृत्वा त्वं मे प्रियतमो भव ।"

कचः — "एतत्कथं भवितुं शक्नोति देवयानि ! त्वन्तु गुरुदुहितासि, मम चाऽसि भगिनी, कथमहं तव पाणिग्रहणं कर्तुमर्हामि ।

कचः — "देवयानि ! त्वं कथं विस्मरसि ? अहन्तु तव सोदरोऽप्यस्मि ।"

देवयानी— "कथं त्वं मे सोदरोऽसि ?"

कचः — "सम्प्रति तु मे जन्म तव पितुरुदरादेव सम्भूतम्। अतोऽहं तव सोदरो भ्राता देवयानि !"

देवयानी— "नहि, नहि, प्रिय कच ! त्वं मम सोदर्यो भ्राता नासि। सोदरस्य भ्रातु र्जन्म मातुरुदराद् भवति, न तु पितुरुदरात्। अतस्त्वं भावनासम्बन्धं त्यक्त्वा मे पाणिं गृहीत्वा मां स्वजीवनसहचरीं विधेहि।"

कचः — "नहि, नहि, देवयानि ! त्वया स्वपितुरुदरान्मे जन्म नैव कदापि विस्मर्तव्यम्। इदानीमावयोरेक एव पितास्ति शुक्राचार्यः। पतिपत्न्योः पितरौ द्वौ भवतो न त्वेको जनकः। अतस्त्वं मे विवाहयितुं योग्या नासि गुरुदेवपुत्रि !"

देवयानी — "कच ! त्वं सर्वथा मां विवाहयितुं योग्योऽसि। त्वं शुक्राचार्यस्य पुत्रो नासि। तव पिता तु देवगुरु र्बृहस्पति र्वर्तते। भगिनीभ्रातरौ मातृगर्भजातौ मन्येते।"

कचः — "देवगुरो र्बृहस्पतेः सुतः कचस्ते निशाचरराजवृषपर्वणोऽनुयायिसेवकै र्निहतः। वर्तमानः कचस्तु श्रीमतः शुक्राचार्यस्य जठरादुद्गतस्तदौरसः सुत एव विद्यते देवयानि ! त्वं सम्प्रति यौवनान्धाऽसि यस्त्वत्पितृजातेन भ्रात्रा सह विवाहं कामयसे।"

देवयानी— "यौ द्वौ बालावेकस्या एव जनन्यास्स्तनपानं कुरुतस्तावेव भगिनीभ्रातरौ भवतः। अतस्त्वामहं भ्रातरं न मन्ये, परं प्रियरूपं त्वामवलोकयामि। अतो मे कामनया मां परिणीय स्वदेवलोकं नय। यथाऽत्र मया तव जीवनरक्षा कृता, तथैव तत्रापि तव जीवनसहचरी भूत्वा ते जीवनं रक्षिष्यामि।"

कचः — शृणु देवयानि ! त्वमसि मे गुरुपुत्री। त्वन्तु मां भ्रातरं न मन्यसे परमहं त्वां भगिनीमेव मन्ये। अतो यद्यहं तव पाणिं गृह्णामि, तन्मे पतितजनस्य नरकेऽपि स्थानं न भविष्यति। तस्मादहं

त्वां नैव परिणेष्ये ।"

देवयानी— "किं त्वं स्वजीवने विवाहं न कर्तासि ? किं कुमारत्वमेव यावज्जीवनं धर्तासि ?"

कचः — "विवहं करिष्ये देवयानि ! परं तव पाणिं न ग्रहीष्यामि, त्वां स्वपत्नीं न विधास्यामि ।"

देवयानी— "कच ! मया त्वं तवागमनकालादेव भावी पति र्दृष्टोऽसि, यदि त्वं मां न विवाहयसि तत्तव विद्या सफला न भवेत् ।"

कचः — "मम विद्या सफला कथन्न भवेत् ?"

देवयानी— "यः पुरुषो नारीहृदयं पीडयति, तन्नारीहृदयं तस्मै शपति, येन स स्वाभीष्टकर्मणि साफल्यं न लभते प्रियवर !"

कचः — "किं त्वं मह्यं शपसि देवयानि !"

देवयानी— "यदि त्वं मामङ्कशायिनीं न करिष्ये तदहं तुभ्यं शापं प्रदास्ये ।"

कचः — "यदि त्वं मह्यं शापं प्रदास्यसि, तदहं तुभ्यमपि प्रतिशापं प्रदास्ये । अतः स्वहठं परित्यज मम च मार्गे बाधिका न भव देवयानि ।"

देवयानी— "यदि त्वं मे पाणिग्रहणं न करिष्यसि तदहं तुभ्यं शपिष्यामि । कथय, मां पत्नीं विधाय देवलोकं नेष्यसि न वा प्रियतम !"

कचः — "मां प्रियतमं न वद देवयानि ? नाऽहं ते विवाहं करिष्ये । त्वं कामान्धा कथं पतसि ?"

देवयानी— "कच ! त्वं नपुंसकोऽसि यदेकान्तेऽपि त्वया रमण्याः पाणिग्रहणमस्वीकृत्य तस्या हृदयं प्रपीडितम् । अतोऽहं तुभ्यं शपामि यत्त्वया मम पितुः सकाशात्सञ्जीवनविद्या या गृहीता, सा निष्फला भविष्यति देवलोके ।"

कचः — "गुरुदेवपुत्रि ! देवयानि ! त्वया किमेतत्कृतम् ? मम सा सञ्जीवनी विद्या, या मया प्राणांस्त्यक्त्वापि शिक्षिता, सा त्वया शापं दत्वा विफला कृता । कथय देवयानि ! मया तव किमहितं कृतम् ?

देवयानी— "कच ! त्वया मम सर्वस्वमेव नाशितम् । मया स्वहृदये तव पतितुल्यसेवा कृता पर त्वया मे पणिग्रहणमकृत्वा हृदयं दुःखितम् । मम कथनादेव मे पित्रा त्रिस्त्वं जीवितः, परं त्वया तत्सर्वमेव विनाशितम् । गच्छ त्वमधुना देवलोकम् ।"

कचः — "देवयानि ! शृणु, नास्मि नपुंसकोऽहम्, परं जितेन्द्रियोऽस्मि । यद्यहं देवगुरुबृहस्पतेः पुत्रोऽस्मि, त्वां च सदा भगिनीमेव स्वीकुर्वे, तदहं कथयामि यत्त्वं ब्राह्मणवरं न प्राप्स्यसीति तुभ्यं मे प्रतिशापः ।"

शुक्राचार्यः "कच ! त्वया मिमिदं कृतम् ? मम वशस्य ब्राह्मणत्वमपि त्वया समापितम् ।" [इति चीत्कुर्वता शुक्राचार्येण तयोर्द्वयोः शापप्रतिशापवचने श्रुते ।]

कचः — "देवयानीशापेन मे सञ्जीवनविद्या निष्फला भविष्यति गुरुदेव ! ततो दुःखितेन मया प्रतिशापः प्रदत्तः ।"

शुक्राचार्यः — "अस्तु वत्स कच ! त्वया शोभनं न कृतम् । तव प्रतिशापेन तु मे वशस्य ब्राह्मणत्वमपि नष्टम् । गच्छ त्वं शीघ्रमेव देवलोकम् । मम वृद्धिगतः क्रोधस्तुभ्यं शापान्तरं न दद्यात् ।"

कचः — "गच्छामि गुरुदेव ! शप्ता मे सञ्जीवनविद्या किं देवहिताय न भविष्यति ?"

शुक्राचार्यः — "यदि त्वं स्वविद्यया कञ्चन देवमन्यं प्रशिक्षितं करिष्यसि, तत्तं गता सा सञ्जीवनविद्या देवहिताय भविष्यति । अधुना त्वं गच्छ । अहमैच्छं यत्त्वं कन्यां विवाह्य देवलोकं नेष्यसि । परं त्वया तु तत्सर्वमेव विनाशितम् । अतस्त्वं गच्छ, मम कोपो वर्धत एव ।"

कचः — "गच्छामि गुरुदेव ! भवता मयि बह्वी कृपा कृता यन्मे देवयान्या शप्तापि विद्या मदन्यं गता देवहितं करिष्यति । अधुना मया

ज्ञातं यद् गुरुदेवः सदा शिष्यं प्रति दयालुर्भवति। सम्प्रत्यहं प्रसन्नो भूत्वा गच्छामि।

गुरुदेव! नमस्तुभ्यम्, वारं वारं च ते नमः।
पुरः पश्चान्नमामि त्वाम्, तुभ्यं मे सर्वतो नमः॥

—०—

# देवयानी

## द्वितीयोऽङ्कः

(गगने गीयते।)

मथ्नाति रतये नित्यं जगत्प्राणिमनांसि यः।
पातु सर्वस्य दाम्पत्यं पञ्चबाणैः स मन्मथः॥

[ततः सर्वे पश्यन्ति। पट उत्सरति। कश्चित् कूपान्तः शब्दान् करोति।]

देवयानी — रक्ष माम्, रक्ष माम्, निस्सारय मां कूपात् निस्सारय माम्।

[वनान्तादागतो राजा ययातिः शब्दान् श्रुत्वा कूपान्तः पश्यति ।]

ययातिः — कस्त्वम्, कस्त्वम् ?

देवयानी — अहमेका बालाऽस्मि, निस्सारय माम्, निस्सारय माम् ।

ययातिः — निस्सारयामि, निस्सारयामि त्वाम् । चिन्तां मा कार्षीः, चिन्तां मा कार्षीः ।

[स उष्णीषं कूपे निक्षिपति, यदाश्रयेण देवयानी कूपमुखमागत्य ययातिकरमवलम्ब्य बहिरागच्छति ।]

ययातिः — 'कथ्यतामार्ये ! किन्नामधेयाऽसि ?"

देवयानी — आर्य ! देवयानीनामिकाऽहम् ।"

ययातिः — 'भद्रे ! कस्याऽऽर्यस्य दुहितासि ?"

देवयानी — 'दैत्यगुरोः शुक्राचार्यस्य बालाऽस्मि भद्र ! कथ्यतामार्य ! भवानस्ति कः ?"

ययातिः — "अहमस्मि ययाती राजा खाण्डवप्रस्थस्य देवि ?"

देवयानी — "त्वं राजा ययातिरसि देव ! क्षत्रियकुलतिलकः"

ययातिः — "आमेवं देवयानि ! चल, तव पितुराश्रम त्वां प्रापयानि ।"

देवयानी — 'इदानीमहं देव ! त्वया सार्धं प्रतिष्ठानमेव गमिष्यामि, पितुराश्रमनयनवार्तां त्यज ।"

ययातिः — "कथमार्ये ! स्वपितुराश्रमं कथन्न गमिष्यसि ? मया सह कथं गन्तासि प्रतिष्ठानपुरम् ?

देवयानी — "किं विस्मृतम् ? अधुनैव त्वया मे पाणिर्गृहीतः । पाणिग्रहीता पतिर्भवति देव !"

ययातिः — "मया तव पाणिग्रहणं कदा कृतम् ? येन त्वं मे पत्नी भवसि ।"

देवयानी — "पाणिग्रहणं कृत्वापि विस्मृतमधुनैव किमार्यपुत्र ! कूपेऽस्मिन्नेकान्ते केन मम पाणिर्गृहीतः ? कथय, किन्त्वया मम पाणिग्रहणं न कृतम् ?"

ययातिः — "मया तव पाणिग्रहणं कृत्वा कूपात्त्वं निस्मारिताऽसि विशुद्ध-हार्दिककृपया किन्तु कामभावनया पत्नीविधित्सया वा तव पाणि र्न गृहीतो देवि !"

देवयानी— "नाहं जाने देव ! तवेदं चरितम्, कया भावनया त्वया कूपे मे पाणिर्गृहीतः, परमार्यपुत्र ! सत्यमेतज्जानामि यत्कोऽपि पुरुषो यदा नार्याः पाणिं गृह्णाति, तदैव तस्याः पाणिग्रहणं भवति । अतोऽहमधुना त्वां स्वपतिमेव मन्ये । अतः स्वेन सह मां प्रतिष्ठानपुरं नय. मया च सह दाम्पत्यमाचर ।"

ययातिः — "नाहं त्वां पत्नीं मन्ये देवयानि ! कथं त्वां सह नयानि ? कूपात्तव निष्कासनेन मया ते प्राणा रक्षिताः । पत्नीं विधातु-मिच्छया मया ते पाणि र्न गृहीतः ।"

देवयानी — "त्वया यदि मे प्राणरक्षा कृता तन्मे पाणिः कथं गृहीतः ? पाणिग्रहणमन्तरेणैव मे कूपान्निस्सारणमुचितमासीत् । मां सुन्दरीमाकलय्य भवता कामभावनया मम पाणिग्रहणं कृतम्, परमधुना तन्न स्वीकरोषि ।"

ययातिः — "कूपात्तव निस्सारणसमये पाणिग्रहणं विवाहो नास्ति देवयानि ! पाणिग्रहणेन त्वं मे गलग्राहं कथं कुरुषे ?"

देवयानी— "यदि त्वं मे पाणिं नाऽग्रहीष्यस्तदहं ते गलग्राहं नाऽकरिष्यम् ."

ययातिः — "पुनस्तव कूपान्निस्सारणं कथमभविष्यत् ? यद्यहं तदा तव पाणिं नाऽग्रहीष्यम् ।"

देवयानी— "तवोष्णीषाश्रयेणैव मम निस्सरणं भवति स्म, पुनस्त्वया कथं मे पाणिर्गृहीतः ? अथ च पाणिर्गृहीतस्तत्तमङ्गीकुरु । नार्याः प्रथमं पाणिग्रहणमेव विवाहो भवति, तत्त्वया कृतमार्यपुत्र ! सम्प्रत्यहमस्मि तव पत्नी । अतो मां सहैव नय, पितुराश्रममधुना न गमिष्यामि देव ?"

ययातिः — "कूपात्प्राणरक्षार्थं कृतं पाणिग्रहणं कथं विवाहं मन्यसे देवि ! गच्छ स्वपितुराश्रमम् । तव पिता ब्राह्मणवरोऽस्ति, केनचिद् विप्रतनयेन सह तव विवाहं स करिष्यति । नाऽहं ब्राह्मणोऽस्मि परमेकः क्षत्रियोऽस्मि । मया सह तव विवाहात्तव कुलपतनमेव । अतस्त्वयाऽत्र चिन्तनीयम् ।"

देवयानी— "मया चिन्तितं विचारितं च देव ! नार्याः पाणिग्रहणमेकवारमेव भवति, तच्च भवता कृतम् । अतोऽहं त्वामेव पतिं मन्ये, मां स्वपत्नीमङ्गीकुरु ।"

ययातिः — "त्वन्तु स्थितप्रबोधनादपि न मन्यसे मे कथनम् । अस्तु, गच्छ पितुः सकाशम् । अहमपि गच्छामि देवयानि !"

देवयानी— "क्व गच्छसि मां विहाय ? मां सह नय । अहमस्मि तव पत्नी । यदि मां सह न नेष्यसि, तदहं पितुः सकाशं गत्वा तव परीवादं करिष्ये । ततः क्रुद्धो मे पिता तुभ्यं शापं प्रदास्यति । अतो मे वचनं कृपया स्वीकुरु देव !"

ययातिः — "तत्किं त्वदीयो जनकस्तव परिणयं मया साकं कृत्वा स्वकुलपतनमुररीकरिष्यति देवयानि !"

देवयानी— "कथन्न देव ! स तु मे कामनां प्रधानामेव मन्यते । अतः स आवयोरुद्वाहमवश्यमेव स्वीकरिष्यति ।"

ययातिः — "अस्तु, पितुराश्रमं चल, स्वकामनां कथय, तदङ्गीकारेण त्वामहं पत्नीं विधास्यामि देवि !"

देवयानी— "चल्यतामार्यपुत्र ! आगम्यतां मया सह, आगम्यतां देव !

(तेन सह चलति ।)

## द्वितीयदृश्यम्

[ततो देवयानी राजा ययातिश्च द्वावपि शुक्राचार्यस्याऽऽश्रमं

प्राप्तुः । सा तत्र नृपतिययातिपरिचयेग समं स्वकामनां प्राकाशयत् । शुक्राचार्येणापि ययातिना सह स्वविवाहं सम्पादयितुं स्वसुतामादिदेश । तस्मिन्नेव दिने सायं वैदिकमन्त्रपुरस्सरं देवयानीययातिपरिणयः समपद्यत । दैत्यराजवृषपर्वणः पुत्रीं शर्मिष्ठामपि स्वसेविकां कृत्वा देवयानी तां सहैव पत्या प्रतिष्ठानमनयत् । देवयानी तत्र ससुखमुवास ।]

"प्रिये ! मम पार्श्वमेहि । अद्यतनीयं रात्रिरावयोः प्रथमसंगमशर्वरी । कथय, त्वमत्रागता किमनुभवसि ?"

"आर्यपुत्र ! मम मनोऽद्य बहु प्रसन्नमस्ति । याऽऽसीद् ब्राह्मणपुत्री, साऽद्यैकस्य राज्ञो राज्ञी वर्तते । प्रियतम ! त्वां पतिं प्राप्याहं बहु प्रसन्नाऽस्मि ।"

ययातिः — "प्रियतमे ! कथय, त्वया ब्राह्मणः कथन्न वृतः ? किन्ते राज्ञी-त्वकामनाऽऽसीत्, येन त्वयाऽहं वृतः ।"

देवयानी— "राजन् ! शप्ताऽहं ब्राह्मणं पतिं प्राप्तुमसमर्थाऽऽसम् । अतो मया त्वं वृतोऽसि ।"

ययातिः — "प्रिये ! त्वं केन शप्ताऽसीः ?"

देवयानी— "बृहस्पतिपुत्रेण कचेन महाराज ! स मे पितृचरणसेवायां सञ्जीवनविद्यां प्राप्तुमागच्छत् ।"

ययातिः — "पुनः किमभवत् ?" [स उत्सुकतया पृच्छति ।]

देवयानी— "प्राप्तविद्यः स मया प्रार्थितो वरणाय, परं तेन मे प्रार्थना नाङ्गीकृता राजन् !"

ययातिः — "तं नाऽदर्शयस्त्वं स्वपितु- शापभयं किं देवयानि ?"

देवयानी— "मया तस्य विद्या विफलत्वाय शप्ता । तेनाऽहं प्रतिशप्ता ब्राह्मणवरमप्राप्तुम् ।"

ययातिः — "त्वया स्वकामभावना प्रथमं कचसमक्षं प्रदर्शिता देवि ! पुनस्त्वयाऽहं स्ववाचा पाशित. ।"

देवयानी— "त्वां विना क्षत्रियकुलोद्भूतं राजानं पतिमवाप्तुमसमर्थाऽऽसम् ।

अतस्तदवसरयापने मया न दृष्टमौचित्यम् ।

ययातिः — "अस्तु, तव कामना पूर्णाऽभूत् । कस्याश्चिद् राजपुत्र्याः स्थानं त्वयाऽत्र समागत्य सुशोभितम् । परं देवि ! त्वं हृदयेन नासि शुद्धा । प्रथमस्तव प्रेमाङ्कुरस्तस्मै कचाय प्रस्फुटितः, न तु मह्यम् ।

देवयानी— "आर्यपुत्र ! यदि स कचो मामस्वीकरिष्यत्, यदहं त्वामहं कथमवरिष्यम् ? यदि च मां स नाऽशप्स्यत्तदप्यहं त्वां नाऽवरिष्यम् । तदानीमपि मे वरणीयः कश्चिद् विप्रपुत्रो वेदपाठी विद्वानेवाऽभविष्यत् । ब्राह्मणवराभावे मया भवान् क्षत्रियो राजा च वृतः ।"

ययातिः — "कचसमक्षं प्रदर्शितकामनया तु त्वं दूषिताऽसि । पुरुषस्य हृदये तां नारीं प्रति सम्मानो भवति या तस्मात्पूर्वं कस्यापि प्रेमिका न स्यात् । परं भवती तु ………………"

देवयानी— 'नैव राजन् ! नैव । मम कौमार्यमक्षुण्णमेव । मामेहि, पश्य तदनुभव । अहं सर्वथा विशुद्धास्मि तथैव, यथा विवाहात्पूर्वं काचित्कुमारी भवति महाराज !"

ययातिः — वरम्, आगच्छ प्रिये ! तव कौमार्यं परीक्षिष्ये ।

[इति वदन् स बाहुभ्यां गाढमालिङ्गति]

## तृतीयदृश्यम्

[तयोर्द्वयोर्दाम्पत्यमनुदिनमवर्धत । देवयानीक्रोडं क्रमशो यदुरनुश्चतुर्वसुश्च तदात्मजा अलङ्कृतवन्तः । महाराज्ञी-महादेवी-प्रियतमादिशब्दैः सा सम्मानिता बभूव । शर्मिष्ठापि ययातेरुपपत्नीत्वमुपगता । इत्थं तेषां देवयानी-शर्मिष्ठाययातीनां दिनानि ससुखमतीतानि ।]

ययातिः — "प्रिये शर्मिष्ठे ! मम पार्श्वमागच्छ । देव्या देवयान्या सहाऽऽगता त्वं ममोपपत्नी भवसि । पुनस्ते किं भयम् ? यत्त्वं मे समीपं

नायासि ।" [इति कामभावनया ययातिस्तां स्वपार्श्वे समाह्वयति ]

शर्मिष्ठा— "महाराज ! यदा भवानाह्वास्यति माम्, तदाऽहं भवत: समीपं कथन्नायास्यामि ? परमत्र देव ! देवयानीभयं भवत्सकाशं गन्तुं मां बाधते ।"

ययाति: — "मा भैषी: । दवयानीभयं स्वहृदयाद् दूरीकुरु देवि ! सा तु साधारणब्राह्मणपुत्री परं त्वमसि राजपुत्री, पुनश्चाहमस्मि राजा । आवयोर्द्वयोस्तव मम च दाम्पत्यं सुखदायि भाविष्यति । आगच्छ देवि ! भयं त्यज ।" [इति कथयता ययातिना शर्मिष्ठाया: पाणिं गृहीत्वा शयनकक्षे प्रवेश: कृत: ।] "प्रिये ! त्वन्नु दैत्यराजवृषपर्वण: सुताऽसि, देवयानी च साधारणब्राह्मणपुत्री, पुनस्त्वयाऽस्या: सेविकात्वं कथमङ्गीकृतम् ?"

शर्मिष्ठा— "राजन् ! भवतैका साधारणविप्रात्मजा कथं स्वराज्ञी कृता ? एतद्विधाने यत्कारणं भवत्समक्षमासीत्, तादृगेव कारणं मदीयपितृचरणगतिबाधकमभवत्, येन मयाऽस्या: सेविकात्वं स्वीकृतम् ।"

ययाति: — सुभगे ! तत्कतमं कारणमासीत्, येन वशीभूता त्वं राजसुतापि तस्या: सेविकाकार्यमूरीकृतवती । अहमपि तत्कारणं श्रोतुमिच्छामि । कथय प्रिये ! कथय ।"

शर्मिष्ठा— श्रूयतामार्यपुत्र ! भवताऽहं पत्नी कृता, मह्यं च राज्ञीमान: प्रदत्त:, तदहं तत्कारणमवश्यं श्रावयिष्यामि । श्रूयताम्—

एकस्मिन्दिनेऽहं सा चाऽऽवां सर: स्नातुमगच्छाव । तत्राऽहं सरस्तटे स्वराजकीयपरिधानमुत्तार्य न्यक्षिपम् । देवयानी स्नात्वा मे वस्त्राणि परिधृतवती ।"

ययाति: — पुनस्तत्र किमभूत् ?"

शर्मिष्ठा— महाराज ! पुनरावयोरित्थं वाग्युद्धमभवत् ।

ययातिः — कथंकारम् ?

शर्मिष्ठा— श्रूयतामित्थम्—

"देवयानि ! त्वया मे वस्त्राणि कथं परिधृतानि ?"

देवयानी— " शर्मिष्ठे ! त्वदीयं परिधानं धारयित्वाहं स्वशरीराभां पश्यामि । राजकीयपरिधानावृताहं कीदृशी भवामीति ।"

शर्मिष्ठा— "अधुनाहं किं परिधास्ये देवयानि !"

देवयानी— "आगच्छ सखि ! सरोवराद् बहिर्भूय मम वसनानि परिधत्स्व । पश्यामि मम वस्त्रपरिवृता त्वं कीदृशी भवसीति ? आगच्छ, सखि ! मम वस्त्राणि धारय ।"

शर्मिष्ठा— "देवयानि ! त्वं कथनेनापि न लज्जसे यदहं राजपुत्री तव साधारणवस्त्राणि धारयानि । यदि त्वं राजकीयपरिधानमेव धारयितुमिच्छसि, तत्त्वया भिक्षुकब्राह्मणवंशे कथं जन्म गृहीतम् ?"

देवयानी — "शर्मिष्ठे ! त्वं मे पितरं भिक्षुक कथयसि ।"

शर्मिष्ठा— "तव पिता भिक्षुकादन्यः कोऽस्ति ?

देवयानी— यदि मे पिता भिक्षुकोऽस्ति, तत्तव पिता दैत्यराजस्तस्य चरणकमले कथ स्पृशति ? त्वया मम पितुरवज्ञा कृता । अस्यापमानस्य दण्डं प्राप्स्यसि ।"

शर्मिष्ठा -- "त्वं काऽसि दण्डदात्री ? दण्डस्तु मम पित्रा प्रदीयते । किन्ते पिता राजा ? राजा तु मे पिता वर्तते । तव पिता तु मम पितुर्याचकोऽस्ति । मम गृहात्पितुः पार्श्वाच्च धनधान्यादिवस्तूनि स गृह्णाति । तव पितैव वस्तूनि याचितुं मम जनकसमीपमायाति । मम पिता तु तव पितुः समीपं न याति । कथय, को महान् मम पिता तव पिता वा ?"

देवयानी— "शर्मिष्ठे ! महांस्तु मे पितैव । मम पिता सञ्जीवनविद्यां जा-

नाति । तव पितुः सैनिकान् स जीवयति । तव पिता मे पितरं प्रणमति पादौ च स्पृशति ।"

शर्मिष्ठा— "मम पिता राजास्ति । त्वं मे राज्ये वससि । पुनरपि स्वां महतीं मन्यसे ? कथमेवम् ?"

देवयानी— "फलेनैव ज्ञास्यसि शर्मिष्ठे ! को महान् ? तव पिता मम पिता वा । तव वस्त्राणि तटे पतितानि सन्ति । तव परीवादं स्वपितरं कथयिष्ये । पुनस्त्वं ज्ञास्यसि त्वमसि महती पुनरहं वा ।"

शर्मिष्ठा— "गच्छ, गच्छ, यच्चिकीर्षसि तत्कुरु । अहमपि तव परीवादं स्वपितरं कथयिष्ये । पश्यामि, कस्या विजयो भविष्यतीति ।"

ययातिः — "पुनस्तस्या एव विजयोऽभवत् । याऽऽसीद् राजसुता, सा तु सेविकाभूत्, या च याचकदुहितासीत्, सा प्रतिष्ठानपुरस्य महाराज्ञी कथ्यते शर्मिष्ठे !"

शर्मिष्ठा— "आं राजन् ! इत्थमेव भूतम् । मया स्वपितु र्वचनं पालित महाराज !"

ययातिः — "किं तव पित्रा कथितं यत्त्वं देवयान्याः सेविका भवेः ।"

शर्मिष्ठा— "आमेवं महाराज !"

ययातिः — "प्रिये ! चिन्तां मा कार्षीः । त्वामहमत्र प्रतिष्ठाने राज्ञीं विधास्यामि ।" [इति वदता ययातिना सा बाहुपाशेन बद्धा ।]

शर्मिष्ठा— "महाराज ! त्यज माम्, त्यज माम् । देवयानी यद्यावां द्रक्ष्यति तत्सा कुपिता भूत्वाऽऽवयोरनिष्टं करिष्यति ।"

ययातिः — "अतः परं सा किमनिष्टं करिष्यति प्रिये ! यदकरणीयमासीत् तदपि तया स्वसख्याः कृतम् । यस्या राज्ञीत्वमासीत्, सा तया सेविका कृता देवि ! तव पिता त्वामस्या देवयान्याः सेविकां कथमकरोत् ? तत्सर्वमपि प्रिये ! मां श्रावय ।"

शर्मिष्ठा— श्रूयतां तदपि राजन् ! तस्याः पिता शुक्राचार्यो मे पितरमाहूतवान्

कथितवांश्च तव पुत्र्या शर्मिष्ठया मे पुत्र्या देवयान्या अपमानः कृतः। अतोऽहं तव राज्यं विहाय क्वाप्यन्यत्र गच्छामि स्वपुत्र्या देवयान्या सह।"

ययातिः — "तदा तव पिता किमकथयत् सुभगे ?"

शर्मिष्ठा — देव ! मम पिता शुक्राचार्यमवदत् — "गुरुदेव ! ते द्वे अपि बालिके स्तः। बालवचनानि प्रति क्रोधो न कार्यो भवता। यदि भवानितो गमिष्यति तर्हि दैत्यरक्षां कः करिष्यति ?"

ययातिः — "ततः शुक्राचार्येण किमुत्तरितं प्रिये ?"

शर्मिष्ठा — तदानीं शुक्राचार्येणोक्तम्— "यदि भवतो दैत्यरक्षा प्रिया, तत्त्वया मे पुत्री देवयानी प्रसन्ना कार्या। तामनुनय। तदिच्छानुसारमेवाहमाचरिष्यामि।" (तस्य वचनं श्रुत्वा प्रासादमागत्य) मम जनको रुदन्मामुक्तवान् — "पुत्रि ! त्वया देवयान्याः कथमवमानः कृतः ? सा ब्रह्मगुर्वी बहुमानिनी वर्तते।" ततो मयोक्तम्— "तया मे परिधान कथं धारितम् ? अस्माकं राज्ये सा वसति। भवानत्र राजा राजपुत्री चाऽहम्। तया भवतोऽपमानः कृतः। किमहं भवदपमानं श्रोतुं शक्नोमि पितः ?"

वृषपर्वा— "तया किमुक्तम् ? मम कोऽपमानः कृतः पुत्रि !"

शर्मिष्ठा— देवयान्या कथितम्— "तव पिता मे पितुश्चरणौ स्पृशति।"

वृषपर्वा— "अत्र मे कोऽपमानो दुहितः ! सोऽस्माकं गुरुः। तच्चरणस्पर्शनमस्माकं कर्तव्यमस्ति। त्वत्कृतावमानेन यदि स मे राज्यं विहाय गच्छति, तदिह दैत्यानां नाशो भविष्यति। किं त्वं स्वजातिविनाशं वाञ्छसि ? कथय पुत्रि ! कथय किमिच्छसि त्वम् ?"

शर्मिष्ठा— "स्वजातिविनाशं नेच्छामि पितः !"

वृषपर्वा — "यदि त्वं जातिनाशं नेच्छसि तत्त्वया मे वचनं पालनीयम्।"

शर्मिष्ठा— "तत्ते किं वचनं पितः ?"

ययातिः — "पुनस्तव पिता किमुत्तरितवान् ?

शर्मिष्ठा— मम पिता देवयानीमाहूतवान् विनम्रं च निवेदितवान् पुत्रि देवयानि ! शर्मिष्ठां कृपया क्षमस्व। परं सा हठिनी नामन्यत। सा मे पितरं कथितवती — "यदि भवानिच्छति यन्मे पिता सञ्जीवनविद्यापारंगत आचार्यस्तव राज्ये निवासं करोतु, सञ्जीवन्या च देवनिहतान् दैत्यानपि जीवयतु तद्राजन् ! शर्मिष्ठा त्वया मम सेविका कार्या, सा च मे विवाहानन्तरं मया सह मम श्वशुरालयं प्रेषणीया भविष्यति। यदि भवान् मम वचनं पालयिष्यति तदहं स्वपितरमत्र वासाय कथयिष्यामि, विपरीताचरणे कृते सति तव राज्यं परित्यज्याऽऽवां कुत्राप्यन्यत्र गमिष्याव:।"

ययातिः — ततस्तव पिता तद्वचनमङ्गीकृतवानिति स्पष्टमेव भद्रे !

शर्मिष्ठा— "तत्पितृवचनपालनानुसारमेवाहमत्र देवयान्या सह तस्या सेविकात्वमङ्गीकृत्य भवत्सेवायामागतास्मि राजन् ! इतोऽग्रे भवान् सर्वथा समर्थोऽस्ति मामत्र राज्ञीं विधातुं महाराज ! यद्यहमपि देवयानीव हठमकरिष्य तन्मे जातेरहितमभविष्यत् ? अतो मया पितुर्वचनं पालितम्।"

ययातिः — "सुभगे ! त्वया चिन्ता न कर्तव्या। अहं त्वामत्र महाराज्ञीं करिष्ये। आगच्छ प्रिये ! मया सार्धम्, तत्र भवने शयनमावां करिष्याव:।" [इति स शयनकक्षं प्रविष्टः शर्मिष्ठया सह।] प्रिये ! देवयान्या वचनं श्रुत्वा प्रासादमागत्य तव पिता दैत्यराजः श्रीमान् वृषपर्वा त्वां किमकथयत् ?"

शर्मिष्ठा— "यदि त्वं जातिनाशं नेच्छसि तत्त्वया देवयान्याः सेविकात्वं स्वीकार्यं पुत्रि !" इति पित्रा निगदितम्।

ययातिः — पुनस्त्वया किं निगदितं शर्मिष्ठे ! वार्तालापं श्रावय ।

शर्मिष्ठा— "यद्यहं पितः । तस्याः सेविकात्वं न स्वीकरिष्यामि तर्हि किं भविष्यति पितः ?"

वृषपर्वा— "तत्पुत्रि ! जातिविनाशो भविष्यति । देवा दैत्यानां वधं करिष्यन्ति । सञ्जीवनविद्या शुक्राचार्यसमीपे विद्यते । आचार्यश्च राज्यं विहाय गमिष्यति यदा, तदा सञ्जीवनविद्यां विना दैत्यान् कः पुनर्जीवितान् करिष्यति ? अतो यदि त्वं देवयान्या सेविकात्वं स्वीकरोषि तद्दैत्यसुरक्षा भविष्यति । कथय पुत्रि ! किं कथयसि ?"

शर्मिष्ठा— "यदि पितः ! शुक्राचार्यगमनेन जातिनाशो भवति तदहं देवयान्याः सेविकात्वं स्वीकरोमि, येन जातिसुरक्षा स्यात् । जातिहितं सर्वोपरि विद्यते ।

वृषपर्वा— पुत्रि ! त्वया तस्याः सेविकात्वं स्वीकृत्य स्वजातिर्विनाशाद्रक्षिता । अधुना शुक्राचार्यो न गमिष्यति मे राज्यं त्यक्त्वा, सञ्जीवनविद्यया च देवहता दैत्या पुनर्जीविता भविष्यन्ति । तवाऽनेन सेवास्वीकारेण दुहितस्तव दैत्यजातिः सदर्णयुक्ता भविष्यति ।"

ययातिः — देवि ! त्वया देवयानीसेवया सह स्वजाते र्मम च हित कृतम् ।

[इत्थं वार्तामालपन्तौ दाम्पत्यसुखमनुभवन्तौ तावेकशयने शयाते ।]

[पटीक्षेपः । निष्क्रान्तौ तौ ।]

— ० —

# देवयानी

## तृतीयोऽङ्कः

[गगने गीयते]

तस्मै नमोऽस्तु शुक्राय येन तपसस्तेजसा ।
एको युवापि सबलो जरया पीडितः कृतः ॥

[सर्वे पश्यन्ति । पट उत्सरति । जनत्रयं प्रविशति ।]

स्थानम्— राजप्रासादः ।

देवयानी— "राजन् ! कस्या अयं बालः ? किं शर्मिष्ठायाः ? कथय, कथं मौनव्रतोऽसि ?"

ययातिः — "महाराज्ञि ! बालोऽयं मामकीन एव ।"

देवयानी—"अयि दैत्यराजपुत्रि शर्मिष्ठे ! त्वं प्रतिष्ठानस्य राज्ञ्या देवयान्याः सेविकाऽसि, न तु राज्ञी । पुनस्त्वया राज्ञा ययातिना सह स्वयौनसम्पर्कः कथं स्थापितः ? येनाऽयं बालस्त्वयि समुत्पन्नः ।"

शर्मिष्ठा– "देवयानि ! सम्प्रति त्वमसि राज्ञी परं भिक्षुकब्राह्मणस्य सुतासि । अहमस्मि राजपुत्री । राज्ञा ययातिनाऽहं स्वभार्याऽङ्गीकृताऽस्मि । येन बालोऽयं मयि सञ्जातः ।"

देवयानी— "शर्मिष्ठे ! त्वमसि मे दासी त्वदीयश्च पुत्रोऽपि मम राजकुमाराणां दासो भविष्यति ।"

शर्मिष्ठा— "देवयानि ! मम पुत्रोऽपि राजकुमारोऽस्ति । स तव पुत्राणां दासो न भविष्यति । मम पुत्रस्त्वत्र राजा भविष्यति ।"

देवयानी— "अयि सेविके शर्मिष्ठे ! विवाहिता राज्ञी त्वहमस्मि, त्वन्तु मे दासी वर्तसे. पुनस्तव तनयः कथं राजा भवितुं शक्नोति ? ममाऽऽत्मजो यदुरत्र प्रतिष्ठाने नृपो भविष्यति ।"

शर्मिष्ठा— "अयि ब्राह्मणपुत्रि ! त्वया राजानं प्रतार्य विवाहः कृतः । स त्वां राज्ञीं न मन्यते माञ्च महिषीं मन्यते । गच्छ, गच्छ, स्वकार्यं कुरु । नाहमस्मि तव दासी । अहन्तु राज्ञो भार्याऽस्मि । या राज्ञो भार्या भवति सैव राज्ञी भवति ।"

देवयानी— "राजन् ! मां वञ्चयित्वा त्वयेयं कथमङ्गीकृता भार्या ! कथय कथं त्वया मौनं धृतम् ? अस्याः प्रतारणाया दण्डं भोक्ष्यसे । त्वां कामिनं लम्पटं दुश्चरित्रं त्यक्त्वाऽहं स्वपितुराश्रममद्यैव गच्छामि त्वमनया दास्या सार्धं ससुखं वस ।" [इति क्रोधेन चीत्कुर्वती ततो गच्छति ।]

— ० —

## द्वितीयदृश्यम्

[देवयान्याः स्वपितुराश्रमगमनेन राजा ययातिः शर्मिष्ठया सह ससुखमुवास । तस्य कामकेलयस्तया सार्धमनुदिनमवर्धन्त । शर्मिष्ठायाः प्रेमपाशे तस्य वर्षाणि व्यतीयुः । यदा शर्मिष्ठायाः पुत्रः पुरुः षोडशवर्षीयोऽभवत्,

तदा तस्य मातरि किमपि नाकर्षणं दृष्ट्वा सा देवयानी ययातेः पुनः स्मृतिपथमा याता। दैवं यच्चिकीर्षति तदेव भवति। शर्मिष्ठया वारं वारं निषेधितोऽपि राजा ययातिर्देवयानीमाह्वयितुं शुक्राचार्यस्याश्रमं जगाम। यदानीमाश्रमं प्रविष्टो ययातिस्तदानीमेव देवयानी पादपान् सिञ्चति स्म।]

देवयानी— (ययातिं दृष्ट्वा) — 'राजन्! ममात्रागताया बहूनि वर्षाण्यतीतानि, कथमद्य समागतोऽसि? गच्छ स्वप्रतिष्ठानपुरं शीघ्रतां कुरु।'

ययातिः — "प्रिये! स्वपितुराश्रमे निवसन्त्यास्तव बहूनि दिनानि व्यतीतानि। सम्प्रति मया सार्धं प्रतिष्ठानं चल, तत्र त्वदीयाः सुतास्त्वां स्मरन्तः सन्ति। आगच्छ सुभगे! मया सह, तव नयनाय रथ आश्रमद्वारि तिष्ठति। देवयानि! कठोरतां नाश्रय, मयि कृपां कुरु, मदीयं प्रेम त्वामाह्वयति, चल मया सह देवि!"

देवयानी— "गच्छ, गच्छ त्वमितो राजन्! अधुनाह त्वया सह न गमिष्यामि। तव भार्या राज्ञी च शर्मिष्ठाऽस्ति, सा राजसुतास्ति, तया सार्धमेव ससुखं काममनुभव, कथमागता मम स्मृतिः?"

[इत्थं तयो वार्तालापमध्ये तत्र शुक्राचार्य आजगाम।]

शुक्राचार्यः — (तं दृष्ट्वा)— "कस्त्वम्? ययातिरसि।"

ययातिः — "आमेवं महाराज!"

शुक्राचार्यः — "कथमागतोऽसि?"

ययातिः — "देवयानीं सह नेतुं भगवन्!"

शुक्राचार्यः — "कथम्?"

ययातिः — "सा मम पत्नी ………"

शुक्राचार्यः — "इमां पत्नीमधुनापि किं स्मरसि? गच्छ त्वम्, सा न गमिष्यति त्वया सह प्रतिष्ठानपुरम्।"

ययातिः – "तां प्रेषय भगवन् ! मया सह ।"

शुक्राचार्यः — "गच्छ, गच्छ, नैव गच्छसि ? मम क्रोधमेव वर्धयसि ?"

ययातिः — "भगवन् ! प्रेषय तां मया सह कृपया ।"

शुक्राचार्यः — "नैव गच्छसि ? अधुनापि त्वयि यौवनं वर्धते । तच्छ्रृणु, त्वां शपामि– 'सम्प्रत्येव जरा तव शरीरं प्रविशतु । त्वं शीघ्रमेव वृद्धत्वमवाप्नुहि, येन तव यौवनबलमाशु नश्यतु । तिष्ठ, तिष्ठ, क्वाधुना गच्छसि ? वृद्धावस्था तव शरीरं प्रविशति, तस्या आनन्दमनुभव ययाते !"

ययातिः — "भगवन् ! किमिदं कृतम् ! कथं त्वयाऽहं शप्तोऽस्मि ?"

शुक्राचार्यः — "ययाते ! त्वया मे पुत्र्या अवज्ञा कृता, तस्या दण्डं भुङ्क्ष्व, गच्छ वृद्धत्वं प्राप्य ............ "

ययातिः — "भगवन् ! क्षमस्व । भवताऽहं शप्तः । किमिदं मम शरीरे भवति ? क्षमस्व माम् । अहं तव जामाताऽस्मि । जरा मम कायं प्रविशति । तामवरोधय भगवन् ।"

शुक्राचार्यः — "ययाते ! त्वया मे सुताया उपेक्षा कृता, तस्याः परिणामोऽयम् । जराया आनन्दमनुभव राजन् !"

ययातिः — "अहो ! किं भवति ? जराक्रान्तं मे शरीरम् । क्षमस्व मां भगवन् ! अहो ! वृद्धोऽहमभूवम् ! जरया कम्पते मे गात्रम् । दूरीकुरु भगवन् ! ममेमां वृद्धावस्थाम् ।"

देवयानी— "पितः ! क्षमस्व जामातरम् । कृपया जरानिवारणोपायं ब्रूहि ।"
[इति राज्ञो ययातेः कायं जरया कम्पमानं विलोक्य स्वपितरं शुक्राचार्यं निवेदयति ।]

शुक्राचार्यः — "पुत्रि ! नाऽयं क्षम्यः किन्तु दण्डनीयोऽस्ति, तथापि तव निवेदनेन जरानिवारणोपायं ब्रवीमि— 'ययाते ! शृणु, यदि कोऽपि युवा तुभ्यं स्वयौवनं दास्यति, तत्ते जरा तस्य शरीरं प्रवे-

क्ष्यति, तदीयं च यौवनं तव गात्रमायास्यति । इत्थं त्वं जरायौवनयोः संक्रमणं परेच्छया कर्तुं शक्नोषि ।"

ययातिः — "भगवन् ! मयि बह्वी कृपा कृता भवता ।"

शुक्राचार्यः — "ययाते ! त्वमितो गच्छ, कञ्चन युवानं यौवनं याचस्व, तत्स्वीकृतिं प्राप्य जरायौवनसंक्रमणाय कथनीयं त्वया — 'मम ययाते जंराऽमुकनामकस्य जनस्य शरीरं प्रविशतु, तदीयं च यौवनं मम शरीरं प्रविशतु ।' विधिनाऽनेन पुनः कस्यापि यूनो यौवनं प्राप्य कामसुखमनुभव, गच्छ त्वमितः शीघ्रम् ।"

ययातिः — "गच्छामि भगवन् ! जराक्रान्तं मे शरीरम् । सम्प्रति शीघ्रं गन्तुमसमर्थोऽस्मि ।" [इत्थं शनैः शनैर्गच्छन् रथमारुह्य स्वराजधानीमायातः ।]

## तृतीयदृश्यम्

[प्रतिष्ठानमागत्य सूतः सर्वेभ्यो वृद्धययातेः परिचयं ददौ । तेन प्रासादं गत्वा राज्ञी शर्मिष्ठापि विज्ञापिता यद्राज्ञ ययातये शुक्राचार्येण वृद्धत्वशापोः दत्तः । वृद्धययाती राज्ञीं शर्मिष्ठामाहूय स्वजरानिवारणोपायं कथयति ।]

वृद्धययातिः — प्रिये शर्मिष्ठे ! यदाहं देवयानीसमीपमगमम्, तदा क्रोधी तस्याः पिता शुक्रो मह्यं शापमददात् — 'जरा तव शरीरं प्रविशतु ।' इति ।

शर्मिष्ठा — मया निषिद्धोऽपि भवांस्तत्र गतस्तां सपत्नीमानेतुम् । स शुक्रस्तु सर्पोऽस्ति । यथा सर्पो दशति स्वफणेन, तथा स शापेन दशति । तस्य सुता देवयानी किं कस्याश्चित्सर्पिण्या ऊना ? अस्मदीयं राक्षसकुलमपि देववदाचरति, परं तत्कुलस्याऽऽचरणं तु राक्षसवदेव, यत्सर्वस्मै भयं दत्ते ।

वृद्धययातिः — प्रिये ! त्वं सत्यमेव वदसि । मया जरानिवारणार्थं स बहु-

वारमनुनीतः ।

शर्मिष्ठा— तदिमां वृद्धावस्थां दूरीकर्तुं तेन क उपायो विज्ञापितो राजन् ! भवतः प्रत्यङ्गं कम्पितमस्ति । जरापीडितं तव शरीरम् ।

वृद्धययातिः — प्रिये ! जरानिवारणाय तेन कथितम्— "यदि कोऽपि युवा तुभ्यं स्वयौवनं दित्सेत्तव जरां च जिघृक्षेत्तत्तत्र जरा तच्छरीरं प्रवेक्ष्यति । इत्थं तव जरा संक्रान्ता भविष्यति । अतो देवयान्याः सुतानाह्वय । तेषु यदि कश्चन स्वयौवनं मह्यं न दातुमेषिष्यति तमहं स्वराज्यान्निष्कासयिष्यामि । प्रिये ! शीघ्रमाह्वय तान् ।

शर्मिष्ठा— कः कोऽत्र भोः !

द्वारपालः — (प्रविश्य) किमाज्ञापयति महाराज्ञी ?

शर्मिष्ठा— गच्छ भद्र ! देवयानीपुत्रान्महाराजाज्ञया सार्धमानय ।

[यदुरनुश्चतुर्वसुश्चेति देवयानीतनूजाः कक्षं प्रविशन्ति ।]

वृद्धययातिः— वत्स यदो ! अहं तव पिता ययातिरस्मि । तव मातरं देवयानीमानेतुं तत्र गतस्तव मातामहशापाज्जराक्रान्तोऽस्मि । अतस्त्वं मह्यं स्वयौवनं देहि, मम जरां च गृहाण, येनाऽहं पुनर्युवा भूत्वा प्रजाः पालयितुं शक्नुयाम् । कथय, किं त्वं मे स्वयौवनं दातुं शक्नोषि ?

यदुः — मान्यवर ! भवान्यः कोऽप्यस्ति, स मे पितृतुल्यो नास्ति । यथा भवानवदत्— मम मातामहशापाज्जरापीडितो भवान्, परमहं स्वयौवनं नैव दित्सामि, भवांस्तु यौवनसुखं भुक्त्वापि पुनर्युवा बुभूषते, परं मया तु यौवने पदमर्पितम्, तस्य सुखन्तु भुक्तं नात्र, तन्मे यौवनं पुनर्गृहीत्वा सांसारिकभोगान् कामयते । भवता तु सम्प्रति वृद्धेनैव भाव्यम्, मया च यौवनं भोक्तव्यम् । अतो मम यौवनभोगावस्था भवतश्च वृद्धावस्था वर्तते । तदहं जरास्थाने स्वं यौवनं नैव दातुमिच्छामि, क्षमस्व मां क्षमस्व ।

वृद्धययातिः — अस्तु, पुत्र ! त्वं स्वयौवनं नैव दित्ससि चेत्तर्हि मम राज्यं परित्यज्य गच्छ। मम सुतेषु स एव मम राज्याधिकारी भविता यो मह्यं स्वयौवनं दाता। स एव मे प्रतिष्ठाने निवत्स्यति, शेषाश्च राज्यं विहाय बहिर्गमिष्यन्ति। अतस्त्वमिदानीमेव मम राज्यं त्यक्त्वा बहिर्गच्छ। [सेनापतिमाहूय] विजयवर्धन ! गच्छ, राजकुमारं यदुं राज्याद् बहिष्कुरु।

[राजकुमारो यदुः सेनापतिना सह बहिर्गच्छति।]

शर्मिष्ठा — [द्वारपालमाहूय] अभयसिंह ! गच्छ, देवयान्या द्वितीयपुत्रम् अनुं सार्धमानय। [द्वारपालो गच्छति।]

द्वारपालः — (प्रविश्य) महाराज ! एष राजकुमारः अनुः।

वृद्धययातिः — पुत्र अनो ! अहं तव जनको ययातिरस्मि। तव मातामहस्य शुक्राचार्यस्य शापाज्जराक्रान्तोऽस्मि। अतस्त्वं मम जरां गृहाण, स्वतारुण्यं च मे प्रदेहि, येन पुनर्युवा भूत्वा प्रजापालने समर्थो भवानि। कथय, किं मे स्वतारुण्यं दित्ससि ?

अनुः — पूज्यवर पितः ! वृद्धोऽपि भवान् पुनर्युवा भूत्वा पुनः सांसारिकभोगान् कथं भोक्तुमिच्छति ? भवतस्तु ते वारा गताः, ये तव सुखदायिनोऽभूवन्। न कोऽपि पिता स्वपुत्रस्य सुखं याचितुमीहते, परं भवांस्तद्विपरीतमाचरति। अतस्त्वं नासि मे पितृसमानः। पिता तु पालको भवति, न तु भक्षकः। तव मे तारुण्ययाचकत्वं मम जीवने सर्वसुखभक्षकत्वमेव। अतोऽहं स्वतारुण्यं भवते नैव दास्ये।

वृद्धययातिः — वरं पुत्र ! वरम्, त्वमपि स्वतारुण्यं नो दित्ससि, तदस्मान्मे राज्याद् बहिर्गच्छ। अत्र तु स एव वत्स्यति, यो मे तारुण्यं दास्यति। [सेनापतिमाहूय] विजयवर्धन ! एनमपि स्वदेशान्निष्कासय।



[अनुरपि सेनापतिना सह बहिर्गच्छति ।]

शर्मिष्ठा — [द्वारपालमाहूय] अभयसिंह ! देवयान्यास्तृतीयतनूजं चतुर्वसुं साकमानय । (द्वारपालो गच्छति ।)

द्वारपालः — (प्रविश्य) महाराज ! एष राजकुमारश्चतुर्वसुरुपस्थितोऽस्ति ।
[द्वारपालो गच्छति ।]

वृद्धययातिः — सुत चतुर्वसो ! अहं तव तातो ययातिरस्मि । त्वदीयमातामहशापाज्जराक्रान्तोऽस्मि । यूना स्वयुवत्वप्रदानेन मे जरानिवारणं भवितेति शुक्राचार्येण कथितम् । अतस्त्वं तरुणोऽसि, स्वतरुणतां मह्यं प्रदेहि, मम जरां च गृहाणेति पितुर्वचनं पालय । कथय, स्वतरुणतां दातुमिच्छसि न वेति ।

चतुर्वसु :— पितः ! कोऽपि पिता स्वतनयं तस्य तरुणत्वं न याचति, पुनस्त्वं कथमित्थमाचरसि । यदाऽहं स्वतरुणत्वं प्रदास्ये तुभ्यं भुक्तभोगाय, तदाहं सांसारिकभोगान् कथमनुभविष्यामि ? भवांस्तु वृद्धोऽस्ति, पुत्रेभ्यो राज्यं प्रदाय वनं च गत्वा तपश्चरेत्, तरुणत्वयाचनां न कुर्यात् । क्षमस्व माम्, मम तरुणता मदीयाऽस्ति, न तु त्वदीया । अतोऽहं स्वतरुणत्वं ते नैव दित्सामि ।

वृद्धययातिः — वरं वत्स ! वरम्, यदा त्वं स्वतरुणत्वं नैव दित्ससि, तदहं त्वां राज्यान्निष्कासयामि । गच्छ, मदीयराज्यं त्यक्त्वा बहिर्गच्छ । [सेनापतिमाहूय] विजयवर्धन ! एनं वसुमपि स्वदेशाद्बहिष्कुरु ।

सेनापतिः — यदादिशति महाराजः । [सेनापति र्वसुमपि गृहीत्वा याति ।]

शर्मिष्ठा — (द्वारपालमाहूय) अभयसिंह ! गच्छ, ममाऽऽत्मजं पुरुमानय ।
(द्वारपालो याति ।)

द्वारपालः — (प्रविश्य) महाराज्ञि ! एष राजकुमारः पुरुरागतोऽस्ति ।

शर्मिष्ठा — महाराज ! देवयानीसुतास्तु कृतघ्ना आसन् । अयं पुरुर्भवदात्मजः

कृतज्ञोऽस्ति। अयं मातरि पितरि च श्रद्धालुरस्ति। अयं भवद्वचनं पालयिता। स्वाभीष्टमेनं याचस्व।

वृद्धययातिः — ममात्मज पुरो! अद्य तव जन्मदाता ययातिस्तव यौवनयाचकोऽस्ति जरानिवारणाय। वत्स! एषा जरा, या मे शरीरे विद्यते, स्वाभाविकी नास्ति। इयं शुक्राचार्यशापात्समागता। यदि त्वं स्वयौवनं मे जरास्थाने मह्यं दित्ससि, स्वयौवनस्थाने च मम जरां जिघृक्षसि, तत्कथय। यदि त्वं पितुर्वचनं पालयसि, तत्त्वं पितुर्जन्मदानर्णान्मुक्तो भविष्यसि, पितृभक्तेषु च तव गणनाऽपि भविष्यति। वद, वत्स! वद, किं मे स्वयौवनं दातुमीहसे ?

पुरुः — कथन्न पितः! भवान्मे जनयिता पिताऽस्ति, पितुर्वचनपालनं पुत्रस्य धर्मोऽस्ति। मम समीपे यत्किञ्चिद् यौवनादिकं जीवनमस्ति, तत्सर्वं भवदंशजनितमेव। अत्र मम न किञ्चिदस्ति, सर्वं भवदधीनम्। मम यौवनं भवत एव, भवतश्च जरा ममैवाऽस्ति, तदहं स्वयौवनं भवते दित्सामि, गृह्यतां तदेतत् पूज्यवर पितः!

वृद्धययातिः — साधु पुत्र! साधु। त्वमेव ममात्मजोऽसि। मम मनोऽतीव प्रसन्नम्। एतत्प्रतिष्ठानराज्यं तवैव। त्वमेव पौरववंशप्रवर्तको भविता। अधुना त्वं स्वयौवनम् मह्यं देहि, मम जरां च गृहाण, येनाहं शुक्रशापान्मुक्तो भवानि। वत्स! तव कल्याणं भवेत्।

पुरुः - पूज्य पितः! गृहाण ममयौवनम्, कथय, केन विधिनाऽहं ते तत्समर्पयानि ?

वृद्धययातिः — पुत्र! मम कथनानन्तरं त्वया— "मम पुरोर्यौवनं पितुर्ययातेः शरीरं प्रविशतु" इति वक्तव्यम्।

पुरुः — पूजनीय पितः! तत्प्रथमं भवान्मयि जरासंक्रमणाय स्ववक्तव्यं निगदतु।

वृद्धययातिः — [प्रसन्नो भूत्वा] मम ययातेर्जरा पुरोः शरीरं प्रविशतु ।

पुरुः — मम पुरो यौवनं पितु र्ययातेः शरीरं प्रविशतु ।

[तयोर्द्वयोः कथनानुसारमेव द्वयोः शरीरे जरायौवने प्रविशतः । राज्ञो ययातेः शरीराज्जरा निर्गत्य पुत्रस्य पुरोः कायं प्रविष्टा । पुरोर्गात्राद् यौवनं निस्सृत्य राज्ञो ययातेर्देहं प्राविशत् । मातुः समक्षमेव तस्याः पुत्रो वृद्धत्वं प्राप्तः । शर्मिष्ठा तदानीमेव लज्जिता सती युवानं स्वपुत्रं जराकम्पितगात्रं वृद्धं, जराजीर्णं च वृद्धं स्वपतिं नवयौवनसम्पन्नं कामभावनापरिपूर्णं युवानं दृष्ट्वा कक्षाद्बहिर्याति ।] पटीक्षेपः ।



## चतुर्थदृश्यम्

ययातिः — "आगच्छ प्रिये ! कथं रुष्टाऽसि ? पूर्ववत्कामाचरणं कथन्नु करोषि ? एहि, सम्प्रत्यहं वृद्धो नास्मि, युवाऽस्मि । मम यौवनं त्वां प्रतीक्षते ।"

शर्मिष्टा — "राजन् ! क्वास्ति तव यौवनम् ? त्वया तु स्वयौवनं शुक्राचार्यस्याश्रमं गत्वा विनाशितम् । मया निषेधितोऽपि त्वं तत्रागच्छः शापेन च वृद्धो भूत्वा पुनरागतोऽसि ।"

ययातिः — "किं नैव पश्यसि सुभगे ! मां युवानम् ? सम्प्रति वृद्धो नास्मि । अतः प्रिये ! मामेहि, कथय त्वं कथन्नायासि ? किमिदं मम यौवनं व्यर्थमेव ?"

शर्मिष्ठा — "प्रियतम ! नास्त्येतत्तव यौवनम् । यद् यौवनं त्वया स्वकीयं कथ्यते तन्मे पुत्रस्य पुरोरस्ति । यावत्कालमनेन मम पुत्रयौवनेन युवाऽसि तावत्कालमहं तवाङ्कशायिनी न भविष्यामि । यदि मां पुनरङ्कशायिनीं चिकीर्षसि, तदिदं यौवनं मम पुत्राय प्रदेहि स्वजरां च तस्माद् गृहाण ।"

ययातिः — "तदहं सुभगे ! पुनर्वृद्धो भविष्यामि, तदा तु मे सर्वं जीवनं व्यर्थमेव भविष्यति प्रिये !"

शर्मिष्ठा — "स्वामिन् । यदि भवान् प्रतिदिनं स्वचरणसेवां मया रात्रौ शय्यायां कारयितुमिच्छति तच्छीघ्रमेव पुत्राय तस्य यौवनं ददातु । अस्यां युवावस्थायामहं त्वां न सेविष्ये ।"

ययातिः — "अस्तु प्रिये ! यदि त्वमेतद् यौवनं नाभिलषसि, तदाशु स्वपुत्रमाहूय, तस्मै तद्यौवनं प्रदास्ये ।"

शर्मिष्ठा — 'वर स्वामिन् ! वरम् । अहं पुत्रमाह्वयामि – पुरो ! शीघ्रमागच्छ ।"

पुरुः — (प्रविश्य) "मातः ! किं कार्यमस्ति ? कथ्यताम् ।"

शर्मिष्ठा — "पुत्र ! तव पिता तुभ्यं त्वदीयं यौवनं दित्सति । पूर्वविधिना जरां पित्रे प्रदेहि, तदनन्तरं त्वदीयं यौवनं त्वं पितुः शरीरात्प्राप्स्यसि । तं विधिमाचरं ।"

वृद्धपुरुः — 'मम कायान्निर्गत्य जरा पितुर्गात्रं प्रविशतु ।

युवा ययातिः — 'मम देहान्निर्गत्य यौवन पुरोः कायं प्रविशतु ।

[तयोर्द्वयोः कथनानुसारमेव वृद्धपुरोः शरीरान्निर्गत्य जरा यूनो ययातेः कायं प्रवशति । इत्थमेव यूनो ययातेः कायान्निर्गत्य यौवनं वृद्धपुरोः शरीरं प्रविशति । ययातिः पुनर्वृद्धत्वमापन्नः पुरुश्च पुनर्युवत्वं प्राप्तवान् । शर्मिष्ठा वृद्धययातेः सेवाशुश्रूषयोः पूर्ववत्संलग्ना बभूव ।]

[पटीक्षेपः । सर्वे निष्क्रान्ताः ।]

**रामकिशोर मिश्रेण व्योमाब्धिखाऽऽत्महायने ।**
**प्रणोता कार्तिके शुक्ले देवयानीति नाटिका ॥**

— • —

# कविरामकिशोरमिश्रस्यपरिचयः

सोरोंपुरी लसति भारत उत्तरस्याम्
तज्जन्मभूमिरिह यस्य हि देवयानी ।
श्रीविश्वनाथ इह यत्प्रपितामहोऽभूत्,
ओ३ङ्कारमिश्र इह यस्य पितामहश्च ॥१॥

बाणग्रहग्रहकलानिधि (१९९५) वैक्रमाब्दे,
श्रीहोतिलालगृहिणाह कलावती यम्,
षष्ठ्यां शनौ धवलफाल्गुनिके ह्यसूत,
काव्यं करोति स तु रामकिशोरमिश्रः ॥२॥

सोरोंपुरे प्रथमशिक्षणमत्र यस्य,
शास्त्रीतिशिक्षणमभूदिह कासगञ्जे ।
आचार्यशिक्षणमभूदथ कणपुयाम्,
सा श्रीमती सुगृहिणी त्विह तस्य देवी ॥३॥

कालाऽश्विशून्यनयनाङ्कित (२०२३) वैक्रमाब्दे,
आषाढसप्तमदिने त्वधिवीरखेड़म् ।
यां षोडशीं सुयुवतीं परिणीतवान्यः,
कीर्तिं तनोति स तु रामकिशोरमिश्रः ॥४॥




यो रञ्जनामजनयत्प्रथमं ततस्तम्,
राजेशमत्र तनयं प्रतिभां सुतां च,
तं गौरवं तदनु सौरभमात्मजं च,
काव्यं वसन्ततिलकं रचितं हि तेन ॥५॥

विद्यालये मदनमोहनमालवीये,
लब्ध्वा प्रवक्तृपदमत्र हि खेकड़ायाम् ।
पी-एच. डी. समधिगम्य परिश्रमेण
सोऽध्यक्षपुण्यपदवीं समलङ्करोति ॥६॥

रम्यैः पदैर्विरचिता रमणीयभावैः,
रत्नानि वर्षति किशोरकथावलिः सा ।
यस्याः प्रवाहकलिता सरसा सुरम्या
भाषा रसेन भरिता विदधाति मोदम् ॥८॥

अङ्गुष्ठदानमपि सुन्दरमस्ति नाट्यम्,
विद्वत्समाजमणिमिश्रमहोदयस्य ।
रम्या च काव्यकिरणावलिरस्ति तस्य,
गीतैरनेकनववृत्तमयी मनोज्ञा ॥७॥

विद्योत्तमां समवलम्ब्य च कालिदासम्,
काव्यं महद् व्यरचयद् बहुनाटकानि ।
छन्दस्कला अपि किशोरकथाः कवियैः,
कान्ति तनोति स तु रामकिशोरमिश्रः ॥९॥

गीर्वाणवाग् भवतु सर्वजनैः सुबोध्या,
एषा प्रचारमुपयातु जनेषु शीघ्रम् ।
इत्याकलय्य कविनाऽनुसृताऽत्र मन्ये
काठिन्यमुक्तपदसंहृतिजुष्टशैली ॥१०॥

हर्षानुरागसुखदुःखविचारपूर्णाः,
हृद्यानवद्यरमणीयगिरा निबद्धाः ।
एकाङ्कनाटककथावलयः प्रणीताः,
पात्रप्रसङ्गसमयोचितभावगर्भाः ॥११॥

छन्दांसि यस्य हृदि कौतुकमावहन्ति,
गीतानि पाठकमनांसि विनोदयन्ति ।
यः काव्यनाटककथारचनाप्रणेता,
तं नौम्यहं सुकविरामकिशोरमिश्रम् ॥१२॥

—वसन्ततिलकाद् ।

## कवेः प्रकाशि

१- काव्यकिरणावलिः (उ० प्र० संस्कृता

२- विद्योत्तमाकालिदासीयम् (महाका

३- श्रीगरुडध्वजसपादशतकम् (उ० प्र

४- किशोरकथावलिः (कथासंग्रहः) ,,

५- मञ्जुष्ठशानम् (नाटकम्) । ६- बा

७- वसन्ततिलकम् (देवस्तुतिकाव्यम्) ।

८- एकाङ्कावलिः, ९- एकाङ्कमाला (एकाङ्कनाटकसंग्रहौ) ।

१०- अन्तर्दाहः (पुरस्कृत उपन्यासः) ।

११- छन्दस्कलावती (छन्दःशास्त्रीयरचना) ।

१२- पतिपत्नीविवादशतकम् ।

## कवेरन्याः संस्कृतरचनाः प्रकाशनद्वारे

१३- एकाङ्कचमत्कृतिः । १४- निबन्धबन्धः ।

१५- छान्दसग्रन्थपरम्परा। १६- वैदिकच्छन्दोनिरूपणम् ।

१७- लौकिकच्छन्दोनिरूपणम् । १८- शैवभक्तितरङ्गिणी ।

१९- देवभक्तितरङ्गिणी । २०- वैष्णवभक्तितरङ्गिणी ।

२१- अवतारभक्तितरङ्गिणी । २२- देवीस्तवतरङ्गिणी ।

२३- त्यागपत्रनिरासम् (पुरस्कृतनाटकम्) ।

२४- पत्नीत्यागम् (पुरस्कृतमेकाङ्कनाटकम्) ।

२५- संस्कृत छन्दों का उद्भव तथा विकास (शोधप्रबन्ध) ।

२६- किशोरकविताकर (हिन्दी रचना) ।

२७- यक्षसन्देश (मेघदूत का हिन्दी में भावानुवाद) ।